ॐ तत्सद्ब्रह्मणे नमः ।

# सिद्धान्तदर्शनम् ।

महर्षिवेदव्यासीयसूत्रम् ।

श्रीमन्मनास्विविश्वदेवाचार्यकृतनिरञ्जनभाष्य-

समेतम् ।

पूज्यपादादिष्टेन श्रीमदर्धकालीकुलश्रीशशिमोहनस्मृ-

तिरत्नेन संस्कृतम् ।

तच्च

हरि नारायण आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८२८

खिस्ताब्दाः १९०७

# शुद्धिपत्रम् ।

| अशुद्धम् । | शुद्धम् । | पत्राङ्क । | पङ्क्तिः । |
|---|---|---|---|
| किरीटाङ्कः | किरीटाङ्क | ९ | ५ |
| स्वप्रयोजनजाल | स्वप्रयोजनजाले | १ | १८ |
| पुरुषावपि | पुरुषावुभावपि | ७ | ११ |
| कृताण्यूनां | कृताणूनां | २० | १४ |
| कर्मादि | कर्णादि | २१ | १६ |
| तदैवाः | तदैवा | २१ | १७ |
| माकृति | माकृते | २२ | ११ |
| इच्छाविरोधिनी वृत्तिः सैव द्वेषो निगद्यते । | सत्तैकस्यापरत्राणुभाव्या-संयोगनामिका । | २२ | १६ |
| अपञ्चीकरणगुणपञ्चीकृताद्या सर्वत्र । | पञ्चीकृताद्याः । सर्वत्रा-पञ्चीकरण | २२ | १९ |
| गुणोत्मिका | गुणात्मिका | २२ | १६ |
| कर्मभूमितो | भोगभूमितो | २४ | ३० |
| दुर्वारो | दुर्वारः सहसा | २६ | १३ |
| नित्यं | नित्यः | ३० | १२ |
| सुखीति | सुखीति । सुषुप्तिकालीनः | ३७ | २३ |
| भेदैर्न | भेदेन | ४२ | २४ |
| भिर्मानिन | भिमानिन | ४३ | ११ |
| ज्जीवस्य | जीवस्य | ४५ | ८ |
| सूर्य्यवद्वै चित्रं | सूर्यवद्वा वैचित्रं | ४७ | २१ |
| धर्याणां | धर्मकाणां | ४९ | १२ |
| जाङ्गुलो | जाङ्गुलं | ६० | २१ |
| जाङ्गुतेति | जाङ्गुलमिति | ६० | २२ |
| जाङ्गुलो | जाङ्गुलं | ६० | २२ |
| रणरोगादे | मरणरोगादे | ६२ | ६ |
| तदेषाहायतामिका | तदेषाऽऽहार्य नामिका | ६३ | ८ |
| ऽयृभ्यासा | ऽयभ्यासा | ६७ | २८ |
| ऽयृभ्यासा | ऽयभ्यासा | ६८ | १ |

| अशुद्धम् । | शुद्धम् । | | पत्राङ्के । पङ्क्तिः । |
|---|---|---|---|
| त्वत्प्रभावे | तत्प्रभावे | .... .... .... .... | ८२। ५ |
| दृगात्मा | दृगात्म | .... .... .... .... | ८४।२५ |
| वुद्धिश्थ | वुद्धिस्थ | .... .... .... .... | ८६।२० |
| दृश्यते | कथ दृश्यते | .... .... .... .... | ९०।२६ |
| एकांभूयेवा | एकीभूयैवा | .... .... .... .... | ९७।२८ |
| रतक्ष्णयं | रतैक्ष्णयं | .... .... .... .... | १००। ७ |
| भैक्ष्यं | भैक्षं | .... .... .... .... | १०१।२० |
| एवमेव | एवं | .... .... .... .... | १०६। ८ |
| सूचयति | सूत्रयति | .... .... .... .... | १०७।२५ |
| संसार | ससार | .... .... .... .... | ११०।३० |
| तस्थ | तस्य | .... .... .... .... | ११०।२३ |

# भूमिका ।

यदि व्यामोहान्तः स्फुरति हृदि सिद्धान्तनिगमः
क सांख्यं क न्यायः क च कणभुगाम्नायकिरणः ॥

व्यासदेवस्य सर्वस्वं शेषं सिद्धान्तदर्शनम् ।
न ये जानन्ति ते मातुर्जठरान्न विनिःसृताः ॥

पुरा किल परमकारुणिकेन भगवता वेदव्यासेन चतुराम्नायसागरोन्मथनात्समुत्थितं यद्विज्ञानामृतमयातयामं तदिदानीं प्रतिपित्सूनां प्रीतये जगत्येतस्मिन्नस्माभिर्विकीर्णम् । अत्र तावदयि भारतीयाः प्रणिधत्त । संप्रति पाश्चात्यादिभोगभूमिप्रभवा बुभुत्सैकरसा बहिः प्रपञ्चोद्यानेषु बंभ्रम्यमाणा धीमन्मधुपा न्यायादिकिंशुककुसुमान्यपनीय वेदान्तारविन्दविज्ञानमकरन्दपिपासवो दृश्यन्ते । अहो भारतजन्मिनो वेदमुखाः पुराऽऽविर्भूतेषु प्रद्योतमानविज्ञानज्योतिष्केषु मनुवाल्मीकिवशिष्ठयाज्ञवल्क्यादिष्वस्तमितेषु प्रादुर्भूतप्रबलम्लेच्छघनघटाच्छन्नायामस्यां भारतभूमौ विराजमानाः स्वसंपदो गूढमहिमानमजानन्तः कियन्तं कालं बहिर्भुवनतल्पे स्वप्स्यथ । न हि किं विजानीथ भवतां विज्ञानदायद्रविणमधुनाऽधिकर्तुं केऽप्यपरेऽध्यवसायिनो धीमन्तः समीहन्ते । किमथापि मोहनिद्रां न हास्यथ । जागृत । जागरित्वा च वैयासिकमानसोर्वराकरं श्रुतियुक्त्यनुभववारिभिरुपचितं सिद्धान्तपादपमेतमुपाश्रयन्तस्तत्फलपञ्चकं ज्ञातव्यज्ञानकर्तव्यकरणप्राप्तव्यप्रापणत्रिविधदुःखात्यन्तनिवृत्तिपरमसुखप्राप्तिरूपं पिबत । नो चेत्तदधिगम्य जन्मभूमेरार्यजातेश्च निरवद्यमहिमानं परिपालयत ।

न खल्वेतद्दर्शनमृते प्रस्थानं किमपि मानेन त्रिविधेनैव श्रुतियुक्तिविद्वदनुभवात्मकेन केनाप्युपवर्णितम् । अत एवोक्तं भाष्यकारेण—

श्रुतिस्मृतिपुराणानां त्रयाणां सह युक्तिभिः ।
संमतं यदतो मानं प्रबलं भुवि किं पुनः ॥
परतत्त्वं यदत्रोक्तं श्रुत्या केवलया न च ।
युक्त्या वा किं त्विहोत्तीर्णं विद्वदनुभवादपि ॥ इति ।

परं तु चार्वाकन्यायादिसांख्यपर्यन्तानि दर्शनजातानि स्मृतिपुराणेतिहासादीनि च भिन्नप्रस्थानानि किं सर्वाण्येव तात्त्विकार्थानीति जिज्ञासायां सर्वसंशयनिरसनपुरःसरतत्त्वचरमसमाधानार्थमेवेदमवतीर्णम् । तत्र चोद्धृतायाः

गन्धर्वनगरादाविन्द्रजालत्वेन लोकैरवगम्यमानायास्तस्मिन्मरुशुक्तिकास्थाणुस्फटिकादौ जलरूप्यपुरुषरेखादिवल्लोहितशुक्लकृष्णा गुणमयी गुणसाम्याऽनिर्वाच्या मूलप्रकृतिरासीदित्यादिश्रुतिभिर्जगत्कारणत्वेनाभिहितायास्ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढामितिश्रुत्युक्तजगत्कारणानुसंधायियाज्ञवल्क्यादिकृतप्रबलप्रत्यक्षप्रमाणाया ध्यानशीलानां मनस्विनामद्याप्यनुभवितुं शक्यायाः पूर्वाचार्यज्योतिःसिद्धान्तकृदवधारितमाध्याकर्षणादिरूपेण नवाविष्कृततडितादिपदार्थाकारेण च परिणममानाया विचक्षणेऽप्यक्षपादकणभक्षादावनभिव्यक्तायाः सर्वासंगतिविभञ्जनैकोपायरूपाया विश्ववस्तुनिगूढायाः स्वकार्यदर्शनेनैवानुमेयाया जगदुपादानभूताया विचित्रैकैककार्यायास्त्रिगुणात्मिकाया भगवतः शक्तेर्विज्ञानविरहेणैवान्धीभूतमार्यजगदिदमित्यवधेयम् । एतावन्तं कालं दर्शनमिदं केनापि हेतुना चतुर्थाश्रमेष्वेवाऽऽसीन्निहितम् । दैवात्सिद्धाश्रमावस्थायी कश्चिदेकः कैवल्याश्रमी परमपुरुषो वाराणसीपुरीमुपातिष्ठत् । तस्य चान्तेवासिनो जनैकब्रह्मचारिणः प्रमुखात्पुरुषपाठीयं "जागर्यायै चिरसुप्तानां श्रुतिरम्बावत्" इति सूत्रम् ,

व्यासस्य वेदार्णवनाविकस्य पूर्वा कृतिर्वादिविनोदनार्था ।

बुभुत्सुबोधाय पुनर्द्वितीया वेदान्तनाम्ना रचितोभयी हि ॥

इति श्लोकं चावगम्य तत्करुणाकटाक्षेणैवोद्धृतं पूज्यपादैः । समुद्धृत्य च तस्य महात्मनः कुतश्चिदनुशासनादेव द्वादश वर्षाणि मुद्रायन्त्रं नोपनीतम् । तदिदानीं पुण्यनगरीयमानन्दाश्रममुपगतम् ।

पूज्यपादाग्रजादेशाद्विज्ञप्तिरियमादरैः ।
श्रीशशिस्मृतिरत्नस्य नवद्वीपनिवासिनः ॥

ॐ तत्सद्ब्रह्मणे नमः ॥

# सिद्धान्तदर्शनम् ।

## निरञ्जनभाष्यसमेतम् ।

जगतः पितरौ पूर्णौ परस्परप्रभापदौ ।
अन्योन्याव्यक्तसंसक्तौ संधेह्यवाप्तये हितौ ॥
निर्गुणोऽपि जगत्कर्ता यो मनःस्थोऽप्यगोचरः ।
मायी सन्नप्यतत्सङ्गो भजतां तमजं विभुम् ॥
दिव्यरत्नकिरीटाङ्कः शङ्खचक्रगदाम्बुजः ।
भास्वन्माल्याम्बरः कोऽपि देवो दीव्यतु मानसे ॥
ध्यात्वा चिन्तामणेर्मातुर्गौरनीलपदाम्बुजे ।
व्याख्यां वक्ष्यामि सूत्राणां मणेरिव महामुनेः ॥

इह किल क्रमात्पुराऽऽविर्भूतेषु नास्तिकेषु चार्वाकादिष्वास्तिकेषु चाऽऽक्षपादादिषु दर्शनजातेषु परतत्त्वविनिर्णयार्थविभिन्नप्रस्थानेषु परमकारुणिकस्य सकलविज्ञाननिलयस्य निखिलनिगमावतंसस्य भ्रान्तिप्रमादविप्रलिप्सादिदोषलेशेनाप्यनाघ्रातस्याऽऽम्नायस्यैवाभिमतेषु पुत्रादिशून्यपर्यन्तात्मतत्त्ववादेषु स्वपक्षरक्षणाय प्रपञ्चिता ये श्रुतियुक्त्यनुभवाभासास्तांस्तावत्सत्तर्कमन्थानेन वेदार्णवोन्मथनाद्यथायथं संस्थाप्य भगवता वेदव्यासेन वेदविपिनसंचारपञ्चाननेन निदिध्यासननिर्धौतमलमानसमुकुरापरोक्षीकृतप्रत्यगात्मना, हिन्दोलितजटाजूटशुभ्रश्मश्रुविलसन्मुखमण्डलनिर्गलद्गूढब्रह्मवर्चसेन, सततलक्षितगभीरलक्ष्यैकमानसमदिरामदाच्छन्नोपमेन, करकलितकुवलयफलवदनवरतविलोकिताखिलसदसदर्थेन, विगलितेऽपि स्वप्रयोजनजालबलवदारब्धानुषङ्गाल्लोकसंग्रहे प्रगाढाग्रहेण, निदानेनावितर्क्येण केनाप्यनर्थे स्वार्थमानिनि प्राणिनिचये कारुण्यपूर्णेन, सततमिह संसारे स्वार्थमर्थयमानानां परमार्थमजानतां विषयामोदमदिरोन्मत्तचेतसां बाह्यवस्तुभावनादप्यलक्षितप्रत्यगात्मप्रवणचेतनोत्पादयितुकामेन, भवार्णवोत्तरणपुराणभारतोत्तमतरीनिकरकर्णधारेण, कालानुकूलागमशासनघोषणार्थश्रीमन्नारायणांशावतारेण, निखिलश्रुतिशिरांस्यालोड्य ब्रह्मसमाधानाख्यानेऽपि प्रतिपित्सूनां हृदि कन्दरे तत्तत्त्वसमुत्तरणसुखसाधनानुशासनोपन्यासमन्तरेणालब्धोपशमान्तरात्मना, बादरायणेन मह-

र्षिणा सिद्धान्तितं यच्छेषं तदखिलश्रुतिरहस्यं पुनरिह प्रजानां परमश्रेयसे चतुःशत्योपनिबद्धम्। अत एवोक्तम्—

व्यासस्य वेदार्णवनाविकस्य पूर्वा कृतिर्वादिविनोदनार्था।
बुभुत्सुबोधाय पुनर्द्वितीया वेदान्तनाम्ना रचितोभयी हि ॥ इति।

तथा च द्विविधा हि मीमांसा, पूर्वोत्तराम्नायभेदात्। तत्रोत्तरमीमांसा पुनर्द्वेधा वादिबुभुत्सुप्रतिपादनभेदात्। तत्राऽऽद्या ब्रह्मसूत्राख्या द्वितीया सिद्धान्तसूत्रात्मिकेति स्थितम्।

निश्चतत्त्वबुभुत्सूनां यततां येन चेतसि।
सरहस्यमिदं भाति तदर्थमयमुद्यमः ॥
मलानि त्रीण्यपाकर्तुं कृतिर्नो वाङ्मनोधियाम्।
छन्दसां वदनेनाऽऽद्यमनेन चापरद्वयम् ॥
यद्यप्यत्र स्फुटं भूयः पदं व्याख्यास्यते पुनः।
चिरसंस्काररोधित्वादर्थस्य गौरवादपि ॥
यदर्थश्रुतिमात्रेण कुशाग्रीयधियामपि।
व्यामोहो रोमहर्षश्च तत्क्षणादुपजायते ॥
बहिरेव गतिः पुंसामिन्द्रियाणां निसर्गतः।
अतोऽत्र सहसा कोऽपि प्रत्यञ्चं न बुभुत्सति ॥
या द्वैतवासना पुंसां जन्मजन्मनि संचिता।
न तद्विरोधिनी वार्ता हठेन हृदि राजति ॥
ब्रह्मणि जगदध्यासः श्रुतियुक्तिसमीक्षणैः।
सिद्धो विद्वत्सु किं तत्र नान्येषु प्रतिभासते ॥
अविद्यानिद्रयाऽऽक्रान्ता नेह जाग्रति जन्तवः।
यथा स्वप्ने शयानानां तेषां जागरणं तथा ॥
यः सुषुप्तः स जागर्ति यो जागर्ति स निद्रितः।
निद्रितो वीक्षते विश्वं प्रबुद्धस्तु न किंचन ॥
इत्याभासः ॥

अथ परमकारुणिको भगवान्महर्षिरिह द्वाभ्यामेव पदार्थाभ्यां सदसद्भ्यां प्रमाणप्रमेयरूपाभ्यां लौकिकालौकिकानां समस्तवस्तूनां निरूपणेन परमपुरुषार्थं प्रतिपादयितुमिच्छन्नादौ सूत्रयति—

**अथ भावौ द्वौ वाव श्रुतोपपत्त्यन्तरीक्षेभ्यः ॥ १ ॥**

अत्राथशब्दो मङ्गलार्थः शास्त्रादौ तदाचरणस्याऽऽवश्यकत्वात्। आन-

न्तर्यवचनो वा । वेदान्तविचारानन्तरमस्याभिहितत्वात् । प्रतिज्ञार्थोऽपि घटते। भावौ द्वौ वावेत्युक्तेः । माङ्गलिकस्तु सर्वत्र निसर्गात्परार्थानीतदध्यादिवत् । तथा च स्मृतिः–

ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ ॥ इति ।

भावौ पदार्थौ द्वौ वाव द्वावेव वर्तेते इति शेषः । कुतः श्रुतोपपत्त्यन्तरीक्षेभ्यः। श्रुतियुक्त्यन्तर्दृष्टिभ्यः । न यागादिवत्केवलायाः श्रुतेः । नापि न्यायाद्युक्तवत्केवलाया युक्तेः । न वा लौकायतिकवत्केवलाया दृष्टेः । अपि तु त्रिभ्य एवेत्यर्थः । अन्तरीक्षेतिपदेन पुरा प्रेक्षावद्भिः क्रमेण श्रुतियुक्ती समालोच्य पुनर्ध्यानसंस्कृतमानसेन द्वावेव साक्षात्कृताविति सूचितम् । मनीषी चेदद्यापि तथैव द्रष्टुमर्हतीत्यपि बोद्धव्यम् । तत्र चैकः पारमार्थिकः । द्वितीयस्तु प्रातिभासिकः । तृतीयपदार्थो नास्तीति वावेत्यवधारणार्थाव्ययेन ज्ञाप्यते । तत्र श्रुतिः—

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥

इत्यादिका । उपपत्तिश्च सदसतोरेकस्य सद्भावश्चेदन्यस्य सत्ताऽनुगम्यते विरुद्धस्वभावयोरितरेतरापेक्षयैव भास्यमानत्वात् । तेजस्तिमिरवच्छीतोष्णवत्सुखदुःखवच्च । किंच । न हि निबन्धकाराणामभ्युपगमवादमन्तरेण प्रस्थानं किमपि संपद्यते । ततश्च सदसतौ द्वौ पदार्थावूरीकृत्य तयोरेकतरस्य परिणामाभ्युपगमेनैव सत्यां सर्वार्थनिष्पत्तौ परमार्थतः षोडशादिपदार्थप्रतिश्रुतिः कथं साधीयसी षड्भाविनां नयेऽपि त्रयाणां सत्तावत्त्वेनान्येषां कल्पनीयत्वस्यार्थागतत्वात्परमाणूनां भेदकतान्यथानुपपत्त्या विशेषपदार्थकल्पितत्वाच्च तद्वदेकातिरिक्तस्य कल्प्यत्वे धीः कुतः क्लीबेत जन्यमात्राणामेकोपादानमनङ्गीकृत्य प्रत्येकोपादानस्य भूयसां नित्यतादेश्च कल्पनायां न किं गौरवं स्यादित्यादिका। अत एव स्मृतिर्भागवती।

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
वासुदेवः सर्वमिति ।

पुराणं च वैष्णवम्—परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते ।
भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ॥ इति ।

एवं च चेत्याचितोर्न तृतीयमिति सूत्रकारोक्तिरपि साधीयसी । अन्तरीक्षस्तु धीवृत्तिप्रत्यावर्तनपूर्वकदर्शनरूपत्वाच्छुद्धधियामेव । सच समाधौ

(क)विशदी भवति। अत्र प्रत्यक्षसिद्धस्य द्वितीयस्यावास्तवत्वं कथंस्विदिति पर्यनुयोगं हसन्निवोपरिष्टात्समादधौ। षोडशादिपदार्थप्रपञ्चस्तु व्यवहार-सौकर्यार्थो लौकायतिकप्रबोधार्थो मूढबुद्धीनां धियः शोधनेन सोपानवच्छ नैरेतन्मार्गारोहणार्थश्च। अत एव स्मृतिः—

प्रथमं स्थूलमारभ्य शनैः सौक्ष्म्यं धिया नयेत्।
स्थूले निर्जितमात्मानं क्रमात्सूक्ष्मे निवेशयेत्॥ इति।

शास्त्रीयतन्निन्दा तु तेषां कल्पनामात्रप्रसूतत्वाच्छ्रुतिविरुद्धांशवत्त्वाच्च। अत एव तदंशस्य त्याज्यत्वमुक्तम्।

अक्षपादप्रणीते च काणादे सांख्ययोगयोः।
त्याज्यः श्रुतिविरुद्धांशः श्रुत्येकशरणैर्नृभिः॥ इति।

अत्र पदार्थयोरुपक्रमेऽपि न्यायादिवन्नेयं पदार्थविद्या किं त्वध्यात्मविद्यैव। तत्र पुरुषस्याऽऽत्मत्वात्तत्प्रतिपादनस्यैव मुख्यत्वाच्च। नन्वेतस्यैव सिद्धान्तस्य वशिष्ठेन पुरा पितुः परमेष्ठिनो विज्ञाय स्वपुत्राय रघुकुलतिलकाय चोपदिष्ट-त्वात्स्वयमप्याचार्येण स्वपितुस्तत्पितृगमितादवगम्य ब्रह्मसूत्रैरभिहित-त्वात्किं पुनरनेनेति चेत्सत्यं तस्यैव प्रपञ्चार्थमिदमाख्यानम्। न हि विवृतिमन्तरेण प्रकृतिपरतन्त्राणां प्रतिपित्सूनां हृदि गुहायां परतत्त्वमारोह-यितुं शक्यते तस्मात्पुनरयमुद्यमो द्वैपायनीयः। अत्र विषयो जीवब्रह्मैक्यं प्रपञ्चालीकत्वं च ताभ्यामेतदागमस्य संबन्धः प्रतिपाद्यप्रतिपादकभावलक्षणः प्रयोजनं च स्वरूपसाक्षात्कारेण मूलाविद्योन्मूलनाज्ज्ञातज्ञेयता कृतकृत्यता प्राप्तप्राप्यता त्रिविधदुःखात्यन्तनिवृत्तिर्नित्यसुखाभिव्यक्तिश्चेति॥ १॥

प्रतिज्ञातयोः स्वरूपमादौ सूत्रषट्केन सामान्यतो निर्दिशति—

## मायामायिनौ॥ २

मायेति माऽय्यते स्वाधिष्ठनाद्भिन्नतया न लभ्यत इति माया। मीयन्ते परि-च्छिद्यन्ते पदार्था अनयेति वा। किं त्वसौ सत्प्रतिभासरूपत्वेन मृषाऽपि मरीचि-कादिवदेव न तु खपुष्पादिवद्व्यवहारवेलायां तस्या भासमानत्वात्। तथा च श्रूयते—'तस्मिन्मरुशुक्तिकास्थाणुस्फटिकादौ जलरूप्यपुरुषरेखादिवल्लो-हितशुक्लकृष्णा गुणमयी गुणसाम्याऽनिर्वाच्या मूलप्रकृतिरासीत्' इति। मायी तदधिष्ठाता 'मायिनं तु महेश्वरम्' इति श्रुतेः। नन्वत्र ब्रह्मप्रतिपादनस्य मुख्य-

(क) तथाच शुद्धचेतसः सविकल्पसमाधौ सर्वं जगत्प्रत्यक्चितिशक्तिनिर्मितं पश्यन्ति किंकारणमित्युपक्रम्य कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यमित्यनेन कालादीनि लोकदृष्ट्याऽनेकान्युक्षिप्य ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढामिति-श्रुत्या समाहितान्तरात्मनां तथा प्रदर्शितत्वादिति सिद्धान्तवार्तिकम्।

त्वात्तस्यैव प्रागुपादानं सांप्रतमिति चेत्सत्यं सतो ज्ञानस्यासतः सापेक्षत्वात्प्राङ्मायोपन्यासः । अत एव ब्रह्मैकप्रतिपादिकाऽपि श्रुतिर्मायातत्कार्याण्यपि निजगादेति सर्वं सुस्थम् ॥ २ ॥

## प्रकृतिपुरुषौ ॥ ३ ॥

प्रकृतीति । प्रकरोतीति प्रकृतिर्जगतः साक्षाद्धेतुः । तथाचाऽऽगमः—'माया वा एषा नारसिंही सर्वमिदं सृजति सर्वमिदं रक्षति सर्वमिदं हरति तस्मान्मायामेतां शक्तिं विद्यात्' इति । प्रकरोत्यनयेति वा । पुरि शयनात्पूर्णत्वाद्वा पुरुषः । पूर्षु शेते तेनेदं पूर्णमिति श्रुतेः । अत्र पुंस्परोपन्यास एतदपि सूचयति विना प्रकृत्युपासनया न प्रसह्य पुरुषो मनस्याविर्भवतीति ॥३ ॥

## जडचितौ ॥ ४ ॥

जडेति । जडः स्वतःप्रकाशशून्यत्वे सति स्वाश्रयभासा भासमानः । तदेतज्जडमिति श्रुतेः । चित्साधनान्तरनिरपेक्षत्वे सति स्वयंप्रकाशमानः 'साक्षी चेता' इति श्रुतेः ॥ ४ ॥

## मेयमायौ ॥ ५ ॥

मेयेति । मेयः प्रमेयो विषयो वा । मायः प्रमाणं विषयी वा । तथा च श्रुतिः—'तमेव भान्तमनुभाति सर्वम्' इति ॥ ५ ॥

## बाध्याबाधौ ॥ ६ ॥

बाध्येति । बाध्यो बाधयोग्यो विचारेणालभ्यः । अबाधो बाधशून्यः कालत्रयेऽप्येकरूपेण विराजमानः । तथा च ॥ ६ ॥

त्रिकालेष्वेकरूपेण भाति बाध्यो न केनचित् ।
तत्पारमार्थिकं वस्तु विद्वद्भिरुपगीयते ॥
विस्पष्टं भासते लोके यद्विचारान्न लभ्यते ।
तत्प्रातिभासिकं नाम प्रतिबिम्बादिकं यथा ॥ इति ।

## परिणामिविवर्तिनौ ॥ ७ ॥

परिणामीति । द्विविधं ह्युपादानं परिणामि विवर्ति च । तत्र घटाद्युत्पत्तौ मृत्स्नादिः परिणामी शुक्तिरजतादौ तु शुक्तिकादिर्विवर्ती । परिणामश्च पूर्वावस्थात्यागेनावस्थान्तरम् । विवर्तश्च तदपरित्यागेनेति । तथा च प्रपञ्चोत्पत्तौ प्रकृतिः परिणामिनी पुरुषस्तु विवर्तीति भावः ॥ ७ ॥

बहुभिर्दृष्टान्तैः पुनस्तत्स्वरूपं विशदयन्नाह—

छायातपवत् ॥ ८ ॥

छायेति। छायावत्प्रकाश्यत्वेन परतन्त्रत्वात्, आतपवत्प्रकाशकत्वेन स्वतन्त्रत्वात्। किं तु च्छाया तावदातपाभ्यन्तरे मा प्रभवति प्रकृतिस्तु पुरुषमध्य एव विराजतीति विशेषः ॥ ८ ॥

मृज्जलवत् ॥ ९ ॥

मृदिति। मृद्वदावरणापादकत्वात्। जलवद्विकृत्युत्पादकत्वात् ॥ ९ ॥

पिण्डमणिवच्च ॥ १० ॥

पिण्डेति। पिण्डवल्लोहवत्स्वयं व्याभ्रियमाणत्वात्। मणिवत्, अयस्कान्तवत्तत्प्रयोजकत्वात् ॥ १० ॥

तप्तायोवच्चिज्जाड्याध्यासः ॥ ११ ॥

तप्तेति। तप्तायोवत्, यथा तप्तलोहपिण्डस्थे वह्नौ गोलाकारोऽयमिति अयोधर्मातिदेशः। लोहे च दहत्ययमित्यग्निधर्माध्यासस्तद्वत्। चिज्जाड्याध्यासश्चैतन्यजडत्वयोरारोपः। तत्र प्रकृतौ चेतनधर्माध्यासः पुरुषे तु कर्तृत्वादिजडधर्मारोपः। तथा हि श्रुतिः 'शरीरत्रयतादात्म्यात्कर्तृत्वभोक्तृत्वमगमत्' इति। अत एव तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गं गुणकर्तृत्वेऽपि तथा कर्तेव भवत्युदासीन इति सांख्योक्तिरपि श्रुत्यनुकूलत्वेन साधीयसी ॥ ११ ॥

तत्र पुरुषस्य सर्वकारणत्वं प्रकृतेश्च तत्पारतन्त्र्यं भङ्ग्यन्तरेण प्रतिपादयति—

चिद्वै शास्ता ॥ १२ ॥

चिदिति। शास्ता कर्मणां नियन्ता। अन्तःशास्ता बहिःशास्तेति श्रुतेः। वैरन्यव्यवच्छेदार्थः ॥ १२ ॥

सद्व्यन्यत् ॥ १३ ॥

इति प्रकृतिपाठे प्रथमः प्रपाठः।

सदिति। सदसद्भ्यामिह पुंप्रकृती वेदितव्ये। हिरवधारणे। तथा च सदेवासतो भिन्नं न त्वसत्सतो भिन्नमिति रहस्यार्थः। अत एवोक्तम् ॥ १३ ॥

जगतो ब्रह्मणा सार्धं संपर्को विद्यते सदा।
ब्रह्मणो जगता सार्धं संसर्गो नास्ति कश्चन ॥ इति।

इति प्रकृतिपाठे प्रथमः प्रपाठः ॥

प्रकृतेः स्वरूपं सामान्यतो निर्दिश्य पुनर्विशेषेण वर्णयन्नाह—

सत्ताऽजायाश्छायावत् ॥ १ ॥

सत्तेति। अजायाः प्रकृतेः सत्ताऽस्तिता छायावत्, यथा प्रतिबिम्बस्य सत्ता मुखादिसत्तातो नातिरिच्यते किं तु तस्येदं प्रतिबिम्बमिति व्यवह्रियते तद्वदित्यर्थः। तथा च सत्ता हि द्विविधा पारमार्थिकी प्रातिभासिकी च तत्र पुरुषस्य सत्ता पारमार्थिकी प्रकृतेस्तत्कार्यस्य च प्रातिभासिकीत्यवसीयते । यद्यत्प्रातिभासिकं तत्तदेव भ्रान्तिवेलायां व्यावहारिकमिति सर्वत्र योज्यम् ॥ १ ॥

कल्पे हविरिवाजे ॥ २ ॥

कल्पेति। कल्पे महाप्रलये, अजे पुरुषे, अजा तिष्ठतीति शेषः। किमिव हविरिव । यथा क्षीरे सर्पिस्तद्वदित्यर्थः ।

एतेन प्रकृतिपुरुषावपि नित्यौ तत्र पुरुषः कूटस्थः सन्नित्यः प्रकृतिस्तु परिणामिनी सती नित्येति फलितम् ॥ २ ॥

गुणाङ्गा गुणवत् ॥ ३ ॥

गुणेति । गुणाङ्गा गुणत्रयसमष्टिरूपा गुणवद्रज्जुवत् । तथा हि श्रुतिः— " लोहितशुक्लकृष्णा गुणमयी " इति । प्रकृतेर्गुण इति तु राहोः शीर्षमितिवद्भेदविवक्षया बोध्यम् । ततश्च प्रकृतिः सदाभासात्मिका तद्गुणाश्च स्फूर्तिविशेषरूपाः । न खल्वेतौ सांख्याभिमतौ पुरुषस्यास्य पारमार्थिकभेदविरहेणैकत्वात्प्रकृतेस्तु तत्परतन्त्रत्वात्पृथक्सत्ताशून्यत्वात्स्वाप्नोपमत्वाच्च । तदुक्तौ पुनरश्रौतत्वादौपनिषदैरनुपादेयाविति ॥ ३ ॥

त्रयी त्रीक्षिभ्यः ॥ ४ ॥

त्रयीति । त्रीक्षिभ्यः, त्रिविधदृष्टिभ्यः। श्रुतियुक्तिलोकदृष्टिभ्य इति यावत्। त्रयी त्रिप्रकारा । तथा हि, श्रुतिदृष्टेस्तुच्छा मरीचिकादिवत् । युक्तिदृष्टेः सदसदाद्यनिर्वाच्या, यथा न माया सद्वस्तु स्वाधिष्ठानज्ञानेन बाध्यत्वात् । नाप्यसद्वस्तु स्वकार्येण भासमानत्वात् । एवमसौ मायिनो नातिरिच्यते । तस्मात्तस्याः पृथगस्तित्वविरहात् । नाप्यभिन्ना परिणामादिमत्त्वान्मुखाभासवत् । लोकदृष्टेस्तु वास्तवी स्वप्नकालीनस्वाप्नप्रपञ्चवत् ॥ ४ ॥

संवृत्याऽऽश्रयं व्यत्येति ॥ ५ ॥

संवृत्येति । आश्रयं स्वाधिष्ठानं संवृत्य, आच्छाद्य व्यत्येति वक्ष्यमाणव्योमादिरूपं दर्शयति । एतेन ब्रह्मैव मायायोगाज्जगदाकारेण कल्पितं भवतीति ध्वनितम् ॥ ५ ॥

सतीवातो याद्दच्छिकी ॥ ६ ॥

सतीति । अतः स्वाश्रयात्तमाश्रित्येत्यर्थः । सतीव विद्यमानेव याद्दच्छिकी यद्दच्छया चरतीति । एतेन मायाया याद्दच्छिकत्वेऽपि पुरुषपारतन्त्र्यमिति सूचितम् ॥ ६ ॥

विचित्रासीमसूः ॥ ७ ॥

विचित्रेति । विचित्राण्याश्चर्याणि बुद्धेरगम्यानि यानि चासीमानि सीमारहितानि कतिविधानि कीद्दशानि वेति निर्णेतुमशक्यानि तानि सूते । विचित्रानन्तकार्याणां बीजमयीति भावः ॥ ७ ॥

प्रकृतेः पुनर्द्वैविध्यं लक्षयति—

छायातपावनच्छाच्छे ॥ ८ ॥

छायेति। छायातपौ, अविद्याविद्ये अनच्छाच्छे मलिनामले । तत्र या सत्त्वप्रधाना सा विद्या, अन्या चाविद्येति भावः ॥ ८ ॥

पुंस्प्रपञ्चप्राततौ ॥ ९ ॥

पुमिति । पुंस्प्रपञ्चौ ब्रह्मब्रह्माण्डे प्रतनुतः, भासयतः । इति क्विप् । तथा च पुमवभासिका विद्या प्रपञ्चावभासिका त्वविद्येत्यर्थः । विद्यायाः शुद्धसत्त्वप्रधानाया ब्रह्मावभासकत्वमविद्योच्छित्तिद्वारेणेति बोध्यम् । नन्वविद्यायाः प्रपञ्चावभासकत्वं कथमुक्तं तमेव भान्तमनुभाति सर्वमित्यादिश्रुतिभिर्ब्रह्मण एव तदभिहितत्वात्, सत्यं, ब्रह्मणः प्रपञ्चावभासकत्वं तु न साक्षात्, किं त्वविद्याद्वारेण राजवत्, ततश्च ब्रह्म प्रागविद्यामवभासयति । अविद्या पुनस्तदाश्रित्य सर्वं जगदाविर्भावयतीत्यवदातम् । अत्रेदमवधेयम्—प्रकृतिद्वारेण पुरुषस्य विकृतिद्वारेण प्रकृतेरपि स्वप्रकाशता श्रुतिविद्वदनुभवसिद्धा कार्यकारणादीनां व्यभिचारदोषादिविवेकस्तु ततः परेष्वेव व्यावहारिकार्थेषु न तु पुरुषे प्रकृतौ च तयोः स्वप्रकाशमानत्वादव्यक्तत्वाच्च ॥ ९ ॥

तत्र ब्रह्मविद्याया उपनिषत्पदवाच्यत्वमाह ।

परोपनिषद् ॥ १० ॥

परेति। परा विद्या। अविद्यापेक्षयोत्तमत्वात्। उप[illegible]षद्, उपनिषीदति सवासनामविद्यां भिनत्तीति सदेर्विशरणार्थत्वात् । त[illegible]पादको ग्रन्थोऽप्युपनिषदुच्यते। तदाहुरभियुक्ताः ॥ १० ॥

ब्रह्मोपनीय या जीवं भिन्तेऽविद्य[illegible]ासनाम् ।
सोपनिषद्ब्रह्मविद्या तद्धेतुरपि सो[illegible]ति ॥

अस्या एव वेदान्तत्वात्सर्वोत्तमत्वमाह श्रुतिः ' स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठाम् ' इति । स्मृतिश्च ' अध्यात्मविद्या विद्यानाम् ' इति ॥ १० ॥

तत्राविद्याया द्वैविध्यमाह ।

द्वय्यन्या ॥ ११ ॥

द्वयीति। अन्या, अविद्या। तथा हि द्विविधा ह्यविद्या। मूलाविद्या लौकिकाविद्या च। तत्राऽऽद्या, अनादिर्ब्रह्मगोचरा स्वत एव जृम्भमाणा लोकत्रयं सृजति विना च स्वरूपसाक्षात्कारात्प्राणिषु न नश्यति । द्वितीया तु दूरत्वाद्यागन्तुकदोषान्मणिमन्त्रादिप्रयोगाच्चावभासते दोषनाशान्मणिमन्त्राद्यपसरणाच्च पुनर्नश्यतीति ॥ ११ ॥

तस्याः पुनर्मिथ्यासंस्काराकरत्वमाह—

खनिर्वासनानाम् ॥ १२ ॥

खनिरिति। वासयन्ति संसारे स्थापयन्तीति वासना मिथ्यासंस्कारास्तासां खनिः प्रभवस्थानमित्यर्थः। तथा च मिथ्यासंस्काराञ्जनयन्त्यविद्या प्राणिनो निबध्नातीति ॥ १२ ॥

ननु मायायाः परमार्थधिया वेद्यत्वविरहान्नास्तितैवेति चेदाह—

राद्धा द्वाभ्याम् ॥ १३ ॥

राद्धेति। राद्धा प्रसिद्धा, कथं द्वाभ्याम्। लोकागमाभ्याम्। तत्र लोकेनेन्द्रजालादिना शास्त्रेण प्रागुक्तश्रुत्यादिना। यद्वा द्वाभ्यां बाह्याभ्यन्तरदृष्टिभ्यां तत्र बाह्यदृष्टिरिन्द्रजालेन लोकानामन्तर्दृष्टिस्तु योगेन योगिनां, तथा च श्रुतिः "ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम् " ॥ १३ ॥

ननु मायायाः स्वकार्येण जृम्भमाणायाः सिद्धावपि लोके कुतस्तत्स्वरूपावगतिरित्यत आह—

तत्त्वाधिगमोऽनुबिम्बेक्षणात् ॥ १४ ॥

तत्त्वेति। तत्त्वाधिगमो मायायाः स्वरूपाविर्भावः। अनुबिम्बेक्षणात्। अनुबिम्बं प्रतिबिम्बं बिम्बान्यत्वेन भासमानत्वे सति बिम्बधर्मवत्त्वमिति तल्लक्षणात्। तस्येक्षणं पर्यालोचनं तस्मात् । तथा हि —किं तावदनुबिम्बं(?)बिम्बमन्यद्वा । नाऽऽद्यं निश्चलेऽपि बिम्बे तच्चाञ्चल्यावेक्षणात् । नापि द्वितीयं बिम्बमन्तरेण तदस्तित्वादर्शनात्। एतेन मायातत्त्वमनिर्वचनीयमपि स्वसंवेदनीयमिति सूचितम् ॥ १४ ॥

मूलप्रकृतिर्गुणसाम्या ॥ १५ ॥

मूलेति। मूलं चासौ प्रकृतिश्चेति मूलप्रकृतिः। मूलेति विकृत्यपेक्षयैव बोध्यम्।

गुणसाम्या, गुणानां सत्त्वरजस्तमसां साम्यं तुल्यावस्थानं यत्रेति। तथा हि श्रूयते—गुणमयी गुणसाम्याऽनिर्वाच्या मूलप्रकृतिरासीदिति। अत एवाऽऽहुः-

प्रकृतीति त्रयो वर्णाः क्रमात्सत्त्वादिवाचिनः।
सत्त्वरजस्तमःसाम्यावस्था प्रकृतिरुच्यते॥

इयमेव स्वतो भवनात्स्वभावोऽप्युच्यते॥ १५॥

गुणस्वरूपं निरूपयन्नादौ नाम निर्दिशति—

सत्त्वरजस्तमांसि गुणाः॥ १६॥

सधर्माणः॥ १७॥

सेति। सधर्माणः, धर्मैः परिणामादिभिः सह वर्तमानाः। तथा हि परिणामिनः संयोगविभागगामिनः परस्परोपाश्रयेणोर्जितमूर्तय इतरेतराङ्गाङ्गिभावोपेताः प्रतिद्वंद्विनोऽपि सांनिध्यादुपकारिणो मिथोऽयस्कान्तकल्पा विश्वनियन्तारश्च॥ १६॥

शान्तघोरमूढाः॥ १८॥

शान्तेति। सत्त्वादयस्त्रयः क्रमाच्छान्तघोरमूढाः स्युरित्यर्थः। तत्र शान्तः स्निग्धः स्वानुकूलो लघुरुद्दीपकश्च। घोरस्तीव्रः प्रतिकूल आरम्भकश्चलश्च। मूढ आवरको गुरुः स्थिरश्च॥ १८॥

सुखदुःखमोहाः॥ १९॥

सुखेति। तत्र सत्त्वं स्वानुकूलत्वात्सुखात्मकम्। रजस्तीव्रत्वाद्दुःखात्मकम्। तम आवरकत्वान्मोहात्मकमित्यर्थः। तत्रापि सुखमैन्द्रियकं दुःखमिश्रं रजोवृत्तिसङ्गादिति मनस्विनां तदपि हेयम्॥ १९॥

व्युत्क्रमोद्गामिनः॥ २०॥

व्युत्क्रमेति। व्युत्क्रमेण तमसो रजो रजसः सत्त्वमिति क्रमेणोद्गन्तुं शीलमेषां ते तथा। एतेन जन्मिनस्तमःप्राबल्येन जायन्ते ततो रजस्ततः सत्त्वं च तेषामाविर्भवतीति सूचितम्॥ २०॥

कृत्स्नेष्वमावत्॥ २१॥

कृत्स्नेष्विति। कृत्स्नेषु सर्वत्र, अमावच्चन्द्रकलासु पञ्चदशस्वमाकलेवानुस्यूतत्वेन प्रच्छन्ना इत्यर्थः। तथा च श्रुतिः 'देवात्मशक्तिं स्वगुणैर्निगूढाम्' इति॥ २१॥

## पौरुषादपि प्रद्योतिनः ॥ २२ ॥

पौरुषादिति । पौरुषादपि न केवलमदृष्टवशात् । पुरुषप्रयत्नादपि । प्रद्योतिनः, देदीप्यमाना भवन्तीत्यर्थः । एतदुक्तं भवति गुणाः क्वचिददृष्टवशेन क्वचित्पुरुषव्यापारेणापि जृम्भमाणाः कार्यमिदमखिलं जनयन्ति ॥ २२ ॥

## प्रारम्भलिङ्गाः ॥ २३ ॥

प्रारम्भेति । प्रारभ्यते योऽसौ प्रारम्भः फलं विवेककाममोहादिरूपं तदेव लिङ्गं ज्ञानोपायो येषां ते तथा । तथा हि यदि विवेकवैराग्यादयः क्वचिदुन्मीलन्ति तदा प्रकृतौ सत्त्वस्फुरणमनुमीयेत । एवं कामक्रोधादिभ्यो रजःस्फुरणं तथा निद्रालस्यादिभ्यस्तमःस्फुरणं च । यच्च तमसो रजसि रजसः सत्त्वे मनसः क्रमावस्थानं सैवोन्नतिरात्मनः सर्वोपरिस्थेन ब्रह्मणा सह तदानीं शनैः संनिकर्षात् । अत एव सत्त्वमनर्थापाये परमसुखे च निदानमिति तदुपाये सततं सुधीभिर्यतितव्यम् ॥ २३ ॥

## स्वार्चिषे सङ्ग्रामो मल्लवत् ॥२४॥

स्वेति । स्वार्चिषे स्वस्य तेजसे सङ्ग्रामो गुणानां गुणान्तरेण सह प्रतिद्वंद्वम् । मल्लवत्, यथा मल्लस्य मल्लान्तरोत्तेजनेन स्वतेजःस्फूर्तिस्तद्वदित्यर्थः । अयं तु देवासुरादिसङ्ग्रामत्वेनाप्युपवर्णितः ॥ २४ ॥

गुणानभिधाय तच्छक्तिं निर्वक्ति—

## शक्तिर्व्यासक्तिः ॥ २५ ॥

शक्तिरिति । व्यासक्तिर्गुणानां परस्परेण विचित्रसंहतिर्विलक्षणसंनिवेशो वा । शक्तिर्नाम योग्यता सामर्थ्याद्यपरपर्याया । गुणव्यासक्तेर्गुणानतिरेकाद्गुणो हि शक्तिः । गुणस्य शक्तिरिति तु भेदविवक्षयोच्यते । एवं च गुणानां भागश्लेषासीमत्वाच्छक्तेरनन्तरूपताविर्भावः । तथा च सदाभासरूपायाः प्रकृतेः स्फूर्तिभेदानामेव त्रिगुणसंज्ञा । गुणानां पुनर्विचित्रस्फूर्तिर्हि शक्तिरिति रहस्यार्थः । तदवस्थात्रयी च व्यक्तिप्रवाहव्यापारभेदात् । तथा हि शक्तिरादौ व्यनक्ति ततः प्रवहति ततो व्याप्रियते चेति गवेषणीयम् ॥ २५ ॥

## सा वै माया दृष्टादृष्टाभ्याम् ॥ २६ ॥

सेति । सा वै व्यासक्तिरेव दृष्टादृष्टाभ्यां लौकिकालौकिकहेतुभ्यां जृम्भमाणा माया, अघटनघटनपटीयसीत्यर्थः । अत एव गुणव्यासक्तिर्योगमायेत्युच्यते । सा च पूर्वं पूर्वगुणे ततोऽनुजगुणेऽपि स्फुरति । अनुजगुणाश्च

वक्ष्यमाणे पञ्चतन्मात्रादावनुसंधेयाः सर्वत्र गुणसंयोगादिनैव वस्तुसंयोगादिर्जायते। गुणाश्रितत्वाज्जगतामिति बोध्यम् ॥ २६ ॥

प्रतिनूत्नमभ्येति स्वम् ॥ २७ ॥

प्रतीति। प्रतिनूत्नं नवं नवं स्वमात्मानमभ्येति लभते शक्तिरित्यर्थः। तथा च शक्तिवैचित्र्यात्तत्कार्याणि भूतानि भावीनि च कतिविधानीति निर्णेतुमशक्यं धीमद्भिरपीति बोध्यम्। एवं च गुणशक्तीनां प्रतिनूत्नाविर्भावेन तत्कार्याणामनियतत्वादिह दूरेक्षिणस्तच्छक्तीरेवाऽऽद्रियन्ते न तु तन्नवकार्याणीति स्थितम् ॥ २७ ॥

गौणोत्पृक्तेरप्युन्मिषति दाववत् ॥ २८ ॥

गौणेति। गौणोत्पृक्तेरपि गुणकार्याणां भूतभौतिकानां संपर्कभेदादप्युन्मिषति, उन्मीलति दाववदरणिसंयोगाद्वनाग्निवत्। इयं सांपर्कीत्युच्यते। ततश्च गुणशक्तिषु काचिद्विदुषि विजृम्भमाणा सार्वज्ञ्यादिकमुद्भावयति लोके च वह्न्ययस्कान्तादिषु विराजमाना दाहाकर्षणादीनि जनयति, वस्तुप्रक्रिययोर्भेदेन चाचिन्त्यानन्तरूपतामाप्नोतीति विश्ववस्तु निगूढं फलबलोन्नेयं शक्तिजगत्सुधीभिरनुसंधेयम्। यत्तु किंपाककल्पागमे विचित्रविधात्रीं श्रुतिप्रसिद्धां शक्तिमीदृशीमनुरीकृत्य कृतेऽपि वैजात्यादिकल्पनाजाले लाघवमभिमतं तत्किं पदार्थस्य किमु पदस्य किंस्वित्स्वस्यैवेति जानन्ति त एव। सुधियस्तु न तां वितर्कयन्ति विज्ञानेनानुभूयमानत्वात्। पुरा किल याज्ञवल्क्यादिभिर्जगत्कारणमनुसंधित्सुभिः प्रत्यक्षीकृतत्वाच्च। तथा च श्रुतिः ' ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम् ' ॥ इति ॥ २८ ॥

स्वसुप्ताः शिवाः सत्कृतिसङ्गाशनतपोभ्यः ॥ २९ ॥

स्वेति। स्वसुप्ताः स्वस्मिन्नात्मनि निहिताः शिवाः शुभदा उन्मिषन्तीत्यर्थः। केभ्यः सत्कृत्यादिभ्यः। तत्र सत्कृतिः संध्यावन्दनादिः। सत्सङ्गो गुरुसाधुतीर्थादिसंनिकर्षः। सदशनं हविष्याद्यदनम्। सत्तप एकादश्युपवासादि। तथाच शास्त्रविहितेन व्यापारेण चेतःस्थगुणानां सत्त्वाधिकतया योगविशेषो जायते यश्चाऽऽत्मकल्याणाय भवतीति मनस्विवेद्यम् ॥ २९ ॥

शक्तयस्ताः संधेयाः कथमित्याह—

गवेषणीया लिङ्गात् ॥ ३० ॥

गवेषणीया इति। लिङ्गात्स्वकार्यात्। तथा हि–काञ्चनीचूर्णादियोगेन रक्तिमादिदर्शनात्तद्योगात्तत्प्रकृतिभूतगुणे लोहिताद्यापादको योगविशेषः प्रभवतीति

सर्वत्रानुपेयम् । एवं च कीदृशेन योगेन कीदृशी शक्तिर्योऽन्यानामुपादाने संचरति कार्यलिङ्गेन तदन्वेषणं बाह्यविज्ञानसोपानमित्यवधेयम् ॥३०॥

तद्भिर्विपरिणामिनो गुणाः ॥ ३१ ॥

तद्भिरिति । तद्भिस्ताभिः शक्तिभिच्छान्दसत्वान्नाकारः । तथाचोक्तं छन्दोवत्सूत्राणि कवयः कुर्वन्तीति । गुणाः प्रकृतिस्थाः । विपरिणामिनः सदृशतया विसदृशतया च परिणामशीलाः । एतेन शक्तिस्फूर्तिद्वारैव गुणानां कारणता भ्रमिणा दण्डस्येव साम्यावस्थायां तु न कारणतेति सूचितम् ॥३१॥

तत्राविद्यायाः शक्तिद्वयमाह—

द्वे मोहिन्याः ॥ ३२ ॥

द्वे इति । द्वे शक्ती आवरणविक्षेपरूपे । तत्राऽऽवरणशक्तिर्वस्तुस्वरूपमावृणोति विक्षेपशक्तिस्तु ब्रह्माण्डान्तं जगदाविर्भावयति । तदुक्तम्—विक्षेपशक्तिर्लिङ्गादि ब्रह्माण्डान्तं जगत्सृजेदिति ॥ ३२ ॥

तत्राऽऽवृतेरपि द्वैविध्यमाह—

आवृती चासत्त्वाभानभेदात् ॥ ३३ ॥

आवृती चेति । तत्रैतन्नास्तीत्यसत्त्वावरणं, तन्न भातीत्यभानावरणम् ॥३३॥

कुतस्तन्निवृत्तिरित्याह—

द्विकादेकस्यान्तर्धिर्विष्णौ ॥ ३४ ॥

द्विकादिति । द्विकाच्छ्रवणमननरूपसाधनद्वयात् । विष्णौ परमात्मनि । एकस्यासत्त्वावरणस्यान्तर्धिस्तिरोधानम् ॥ ३४ ॥

शेषादन्यस्य ॥ ३५ ॥

शेषादिति। शेषान्निदिध्यासनादन्यस्याभानावरणस्यान्तर्धिरित्यनुषङ्गः॥३५॥

कर्मापीतेर्विक्षेपस्य ॥ ३६ ॥

कर्मेति । कर्मापीतेः प्रारब्धसंक्षयात् । विक्षेपस्यान्तर्धिरित्यर्थः । तथा चाऽऽत्मविदामावरणशक्तिमदज्ञानविरहेऽपि प्रारब्धक्षयपर्यन्तं विक्षेपशक्तिमदज्ञानं तिष्ठतीति सर्वं सुस्थम् ॥ ३६ ॥

प्रतिद्वंद्वाद्धि प्रारम्भाः ॥ ३७ ॥

इति प्रकृतिपाठे द्वितीयः प्रपाठः ॥

प्रतीति । प्रतिद्वंद्वं गुणानां गुणान्तरस्याभिभवाय व्यापारविशेषः । तस्मादेव प्रारम्भाः कार्यनिचया जायन्त इत्यर्थः । तथा च—एकस्याः

शक्तेरपरां निर्जित्य विजृम्भमाणाया एवाखिलमिदं जायते। एतेन प्रतिद्वंद्वं विना किमपि कार्यमुत्पत्तुं नार्हतीत्यपि सूचितम् ॥ ३७ ॥

इति प्रकृतिपाठे द्वितीयः प्रपाठः।

अथ तृतीयः प्रपाठः।

न खलु प्रपञ्चेऽस्मिन्नुपादानस्य परिणामिनो विवर्तिनश्च विज्ञानमन्तरेण वस्तुस्वरूपं तद्धर्मादिकं च सुव्यक्तं भवितुमर्हतीति तदुपादानद्वयं श्रुतिविद्वदनुभवसिद्धं विस्तरेणाभिधाय संप्रति सृष्टिप्रकारं दर्शयन्नाह—

प्रकृतेस्त्रिजगत् ॥ १ ॥

प्रकृतेरिति। प्रकृतेस्त्रिगुणात्मिकायास्त्रिजगद्गतिशीलं लोकत्रयं जायत इति शेषः। तत्राऽऽद्यं भूर्नाम स्थूलरूपं बहिरिन्द्रियग्राह्यं जाग्रत्स्थानीयम्। द्वितीयं भुवो नाम सूक्ष्मरूपं बाह्येन्द्रियनिरपेक्षान्तरिन्द्रियग्राह्यं स्वप्नस्थानीयम्। तृतीयं स्वराख्यं कारणरूपं सर्वेन्द्रियनिरपेक्षाज्ञानव्यापारग्राह्यं सुषुप्तिस्थानीयम्। तच्चिन्तायास्तु क्रमात्स्थूलसूक्ष्मसूक्ष्मतरत्वं बोध्यम् ॥ १ ॥

कारणादिक्रमेण जगदुत्पत्तिं दर्शयति—

सत्त्वादव्यक्तम् ॥ २ ॥

सत्त्वादिति। सत्त्वात्प्रकृतेः सत्त्वगुणोद्रेकादव्यक्तं तदाख्यावरणशक्तिः कर्तृरूपाऽऽसीदित्यर्थः। तथा च श्रुतिः 'सा पुनर्विकृतिं प्राप्य सत्त्वोद्रिक्त्याऽव्यक्ताख्यावरणशक्तिरासीदिति। अत्र जडमप्यव्यक्ताख्यमावरणं वस्तुस्वरूपं नाऽऽवृणोति काचकुम्भवदित्यवधेयम् ॥ २ ॥

रजसो महत् ॥ ३ ॥

रजस इति। रजसो रजोगुणोद्रेकात्तदाख्यविक्षेपशक्तिः करणरूपाऽऽसीदित्यर्थः। तथा च श्रुतिः—ईशाधिष्ठितावरणशक्तितो रजोद्रिक्ता महदाख्या विक्षेपशक्तिरासीदिति ॥ ३ ॥

तमसोऽहंकारः ॥ ४ ॥

तमस इति। तमसस्तमोगुणोद्रेकात्। अहंकारस्तदाख्यस्थूलशक्तिरुपादानरूपाऽऽसीदित्यर्थः। तथा च श्रुतिः–' हिरण्यगर्भाधिष्ठितविक्षेपशक्तितस्तमउद्रिक्त्याऽहंकाराभिधा स्थूलशक्तिरासीत् '॥ इति। एष एव प्रबलतमस्कत्वान्मूलाज्ञानतयाऽभिहितस्थूलसूक्ष्मयोः कारणत्वात्कारणदेहश्च॥ एवं तदानीं तेषु क्रमाज्ज्ञानेच्छाक्रियाः शक्तिरूपा एव जायन्ते ॥ ४ ॥

## तस्मात्पञ्चतन्मात्राणि तन्तुवत् ॥ ५ ॥

तस्मादिति । तस्मादहंकारात्पञ्चतन्मात्राणि शब्दस्पर्शरूपरसगन्धतन्मात्राणि क्रमादजायन्त तन्तुवदूर्णनाभसूत्रवत् । कार्पासादिसूत्रवद्वा । तथा हि श्रूयते—'तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी' । इति । अत्र श्रुतावाकाशादिपदेन तन्मात्राण्युच्यन्ते सूक्ष्मतन्मात्राणि स्थूलीकर्तुं सोऽकामयतेति श्रुतिशेषात्तदानीं तेषामपञ्चीकृतत्वाच्च ॥ ५ ॥

## व्यञ्जन्ति पुनर्गुणाः ॥ ६ ॥

व्यञ्जन्तीति । गुणाः सत्त्वरजस्तमांसि पुनरुत्पद्यमानेषु व्यञ्जन्ति विशेषेण भासन्ते । तथा च श्रुतिः—'तानि पञ्च तन्मात्राणि त्रिगुणानि भवन्ति' इति । यथा सूक्ष्मे तथा पुनरपि स्थूले प्रतिभान्तीति बोध्यम् । तथा च गुणानां कार्येषु पुनः कार्यान्तरोत्पादकसंनिवेशविशेषो जायते ॥ ६ ॥

कारणजगदभिधाय सूक्ष्मजगदुत्पत्तिप्रकारमाह—

## सत्त्वत्र्यंशसमष्टेरन्तःकरणं पटवत् ॥ ७ ॥

सत्त्वेति । सत्त्वत्र्यंशसमष्टेः पञ्चतन्मात्रेषु जृम्भमाणानां सत्त्वगुणानामंशत्रयमेलनादन्तःकरणमन्तरिन्द्रियं पटवद्यथा तन्तवः समेत्य पटरूपा भवन्ति तद्वदजायतेत्यर्थः । तथा च श्रुतिः—स तेषां सत्त्वांशं चतुर्धा कृत्वा भागत्रयसमष्टितः पञ्चवृत्त्यात्मकमन्तःकरणमसृजदिति ॥ ७ ॥

तन्नामभेदमाह—

## बुद्धिमनोनाम वृत्तिवैचित्र्यात् ॥ ८ ॥

बुद्धीति । कुतो वृत्तिवैचित्र्यात् । निश्चयरूपादिवृत्तेर्विभिन्नत्वादित्यर्थः । तथा च निश्चयात्मिकया वृत्त्या बुद्धिः । बुद्धिरप्यभिमानात्मिकयाऽहंकारः । एवं संशयविकल्पसंकल्पाद्यात्मिकया मनो मनश्च स्मरणात्मिकयाऽनुसंधानात्मिकया वा वृत्त्या चित्तं भवति । तदुक्तं च—

मनोबुद्धिरहंकारश्चित्तं करणमान्तरम् ।
संशयो निश्चयो गर्वः स्मरणमि(णं चे)ति वृत्तयः ।
बुद्धितो हि ततो वृत्तिरिच्छादिरवभासते ॥ इति ।

वृत्तिवैचित्र्यं च स्थानभेदात्तत्र च मनसः स्थानं भ्रूमध्यं चित्तस्य तदुपर्यहंकारस्य तदुपरि बुद्धेस्तदुपरीति प्रतिपत्तव्यम् । इत्थमन्तःकरणस्य

तमोरजः प्राबल्यादेव प्राणिनां लौकिकप्रकृतिः स्वभावो वा वर्तते सत्त्वाधिक्यात्तु तद्वामतेत्यवधेयम् ॥ ८ ॥

## धीन्द्रियाण्येकैकांशेभ्यः ॥ ९ ॥

धीति । एकैकांशेभ्यः पञ्चतन्मात्राणामन्तःकरणघटकीभूतांशेतरसत्त्वांशेभ्यो धीन्द्रियाणि ज्ञानेन्द्रियाणि श्रोत्रादीनि क्रमादजायन्त । यथा शब्दांशाच्छ्रोत्रं स्पर्शांशात्त्वग्रूपांशाच्चक्षू रसांशाद्रसना, गन्धांशान्नासिकेति । तथा च श्रुतिः'स तेषां सत्त्वतुरीयभागेन ज्ञानेन्द्रियमसृजत् ' इति । तस्मात्तैस्तैरेवेन्द्रियैर्ग्राह्याः शब्दस्पर्शरूपरसगन्धाः क्रमाद्वर्तन्ते । एवं च श्रोत्रव्यतिरिक्तं कर्णशष्कुल्यवच्छिन्नं नभोदेशाश्रयं शब्दग्रहणशक्तिमदिन्द्रियं श्रोत्रेन्द्रियमिति तल्लक्षणम् । एवं त्वगादावूह्यम् ॥ ९ ॥

## रजस्त्र्यंशसमष्टेः प्राणः ॥ १० ॥

रज इति । रजस्त्र्यंशसमष्टेः पञ्चतन्मात्रेषु जृम्भमाणरजोंशत्रयमेलनात्प्राणस्तन्नामाऽन्तर्वायुर्भवति । तथा च श्रुतिः–' स पञ्चभूतानां रजोंशं चतुर्धा कृत्वा भागत्रयात्पञ्चवृत्त्यात्मकं प्राणमसृजत्' इति । तस्य च स्थानभेदात्क्रियाभेदाच्च नामभेदो यथा—

हृदि प्राणो गुदेऽपानः समानो नाभिदेशगः ।
उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः ॥
उद्गारे नाग आख्यातः कूर्मस्तून्मीलने स्मृतः ।
कृकरस्तु क्षुति ज्ञेयो देवदत्तो विजृम्भणे ॥
न जहाति मृतं चापि सर्वव्यापी धनंजयः ।

गुणविशेषोन्मीलनात्स्थानविशेषे गतिरपि यथा—

नाभिकण्ठभ्रूमध्यान्तं प्राणः संचरते क्रमात् ।
तमोरजःसत्त्वोद्रेकान्निस्त्रैगुण्ये तदूर्ध्वभाक् ॥ इति ।

प्राणवाय्वोरुपादानभेदात् । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुः'इति श्रुतौ पृथङ्निर्देशाच्चोभयोर्भेदेऽपि वातीत्यर्थैक्यात्प्रागस्य वातात्पृथगननुभवाच्चापृथगुपन्यासोऽपि द्रष्टव्यः ॥ १० ॥

## कर्मेन्द्रियाण्येकांशेभ्यः ॥ ११ ॥

कर्मेति । एकैकांशेभ्यः पञ्चतन्मात्राणां प्राणघटकीभूतांशेतररजोंशेभ्यः कर्मेन्द्रियाणि वागादीनि क्रमादजायन्त । यथा शब्दांशाद्वाक्, स्पर्शांशात्पाणी रूपांशात्पादो रसांशात्पायुर्गन्धांशादुपस्थ इति । तथा च श्रुतिः ' स तेषां तुर्यभागेन कर्मेन्द्रियमसृजत् ' इति । यथाऽऽहुः—

कर्मेन्द्रियाणि वाक्पाणी पादपायुध्वजानि च ।
वाक्यादानविहरणोत्सर्गरतानि वृत्तयः ॥ इति ।

एवं च वाग्व्यतिरिक्तं वागाश्रयमष्टस्थानवर्ति शब्दोच्चारणशक्तिमदिन्द्रियं वागिन्द्रियमिति तल्लक्षणम् । एवं पाण्यादावूह्यम् ॥ ११ ॥

परिणामीन्युभानि ॥ १२ ॥

परीति । उभानि, अन्तर्बाह्येन्द्रियाणि परिणामीनि परिणामशीलानि । तत्र च निरोधव्युत्थानाभ्यामन्तरिन्द्रियाणि व्युत्थानेनैव बाह्येन्द्रियाणीति॥ १२ ॥

परिणामाकारं निर्दिशति—

ज्ञानेच्छाक्रियास्ते ॥ १३ ॥

ज्ञानेति । ते परिणामा ज्ञानादिरूपाः । तथा च श्रुतिः ‘ कामः संकल्पो विचिकित्सा धृतिरधृतिर्ह्रीर्धीर्भीरेतत्सर्वं मन एव ’ इति । ज्ञानमिहार्थाकारवृत्तिः । इच्छा, एतज्जायतामितिवृत्तिरूपा, क्रिया परिस्पन्दादिव्यापारलक्षणा, विवेकादिश्च निरोधशक्त्यैव जायत एवमन्याश्चान्तर्वृत्तयो यथायथमनुसर्तव्याः॥१३॥

स्वपन्ति स्फुरन्ति च ॥ १४ ॥

स्वपन्तीति । जायमानास्ते ज्ञानाद्याः स्वपन्ति सूक्ष्मरूपत्वेनास्फुटतामाप्नुवन्ति । स्फुरन्ति समये प्रकाशन्ते । अत्र स्वापः संस्कारः ॥ १५ ॥

संस्कारः स्मृतिक्लेशहेतुर्वासना ॥ १५ ॥

संस्कार इति । स्मृतिर्वक्ष्यमाणा, क्लेशा अविद्यास्मितारागद्वेषाभिनिवेशाः । तेषां हेतुर्यः संस्कारश्चेतोगुणानां संनिवेशविशेषः स वासनाख्य इत्यर्थः ।

विपाकहेतुरदृष्टम् ॥ १६ ॥

विपाकेति। विपाका जात्यायुर्भोगास्तद्धेतुर्यः संस्कारस्तददृष्टं नामेत्यर्थः॥१६॥

ग्रन्थेनान्तर्जालवदाततम् ॥ १७ ॥

ग्रन्थेनेति। ग्रन्थेन संस्काराणां रचनाविशेषेण । अन्तरन्तःकरणं जालवद्यथा सूत्राणां मिथः संनिवेशेन जायमानं मत्स्यजालं लूताजालं वा तद्वदाततं विस्तृतं वर्तत इत्यर्थः॥ १७ ॥

ज्ञानक्रियावष्टम्भानामन्यतमवत् ॥ १८ ॥

ज्ञानेति । अत्रावष्टम्भो ज्ञानक्रिययोरवरोधोऽन्यतमवत्क्वचिज्ज्ञानवत्क्वचित्क्रियावत्क्वचिदवष्टम्भवदित्यर्थः । अत्र ज्ञानक्रियाभ्यां प्रतिलोमानुलोमयोरू-

र्ध्वाधःस्रोतसोर्वा वृत्त्योः परिग्रहः । यदाऽन्तःकरणमवष्टम्भशक्तिमत्तदैव निद्राविर्भावः । एतेन व्यापारशक्तिर्गुणानामेवेति प्रत्येतव्यम् ॥ १८ ॥

## निर्मनस्के साराभिव्यक्तिः ॥ १९ ॥

निरिति । निर्मनस्के मनोव्यापारशून्येऽन्तःकरणे साराभिव्यक्तिर्वस्तुस्थिरांशाविर्भावः । तथा च । यदाऽन्तःकरणं बुद्धिरूपतामादधानं व्याम्रियते तदैव तत्र साराभिव्यक्तिः । यदि पुनर्मनोरूपतया परिणमते तर्हि विषयविकल्पेन व्याम्रियमाणत्वात्तत्र तदभिव्यक्तिर्न भवतीति भावः ॥ १९ ॥

ऊर्ध्वलोकानुभवस्थानं निर्वक्ति—

## भ्रूपरि भुवः स्वः ॥ २० ॥

भ्रूपरीति भ्रुवोरुपरि भुवर्लोकः सूक्ष्मः प्रपञ्चस्तदुपरि स्वर्लोकः कारणप्रपञ्चस्तत्रैव ध्यानयोगेन प्राणैः सह विराजमानस्य दुःखानवच्छेदकीभूतशरीरावच्छिन्नसुखमिति । अत एवोक्तम्—

> प्राणैः सह यदा चेतो भ्रुवोरुपरि राजति ।
> स्वहितं विश्वतत्त्वं च तदैव स्फुरति स्वतः ॥ इति ।

तथा चान्तःकरणं भ्रूमध्ये विलसत्स्थूलाभिमानि तदुपरिलिङ्गाभिमानि तदुपरि कारणाभिमानि तत्रैव सत्त्वस्य परमोत्कर्षे ब्रह्मात्मैक्याभिमानीत्यप्यवधेयम् ।

तत्र च स्थूलाङ्गाभिमानवेलायां लिङ्गाङ्गवृत्तिरपि क्रोधहिंसादिः पीनाङ्गमाक्रामति । रजस्तमोजत्वेनाधःस्रोतस्कत्वात् । यद्यपि जीवो जाग्रदादिषु क्रमात्रिजगत्सु विहरति तथाऽपि नासौ कृतार्थः स्वेच्छया तदनर्हत्वात् । गुणप्राबल्येन परिच्छेद्यत्वाच्च । यः पुनः स्वोपाधिपारतन्त्र्यविरहेण भोगायतनमनपेक्ष्य सूक्ष्मे कारणे च जगति यदृच्छया विहर्तुं शक्नोति तस्यैव सर्वार्थसिद्धिरुन्नत्यवधिश्च जायते नान्यस्येति रहस्यम् । तथा च भुवर्लोकस्वर्लोकयोर्बहिरिन्द्रियग्राह्यत्वाभावात्तत्र स्थूलदेहमनपेक्ष्य स्वेच्छया गमनं योगाधीनं तद्देहान्ते तु केवलादृष्टपरतन्त्रमिति ॥ २० ॥

## पराञ्चीन्दुवत्खान्युभावन्ति ॥ २१ ॥

परेति । परा प्रातिलोम्येनाञ्चितुं गन्तुं शीलमेषां तानि पराञ्चि, निसर्गाद्बहिष्प्रवणानि । इन्दुवत्स्वच्छाधानि, उभावन्ति प्रत्यक्परागावर्तनशक्तिमन्ति खानि ज्ञानेन्द्रियाणि जायन्त इत्यर्थः । पराञ्चीत्यनेन खानां नैसर्गिकशक्ति-

दर्शिता । अत एव श्रूयते—पराञ्चि खानि व्यतृणत्स्वयंभुस्तस्मात्पराक्पश्यति नान्तरात्मन्। कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्निति । तथा च । यथेन्दुरमायां भून्यस्तमुखः पौर्णमास्यां तु तदभिमुखस्तद्वत्खानि नैसर्गिकरजोवृत्तौ बहिर्मुखानि सत्त्ववृत्तौ पुनरात्मोन्मुखानीति भावः ॥ २१ ॥

जन्यसुखस्वरूपमाह—

## चिदुद्वृत्तौ सुखम् ॥ २२ ॥

चिदिति उद्वृत्तावन्तर्मुखपरिणामे भासमाना चित्सुखं नामेत्यर्थः । तथा चोद्वृत्तौ चित्स्वरूपं स्वानुकूलतया भासमानत्वात्सुखमिति भावः । किं तु वृत्तिचितोर्भेदाभानात्तद्वृत्तिरेव सुखमिति लोकव्यवहारः ॥ २२ ॥

## दुःखमन्यत्प्रातिकूल्यात् ॥ २३ ॥

दुःखमिति । अन्यद्बाह्याभिमुखायां वृत्तौ चित्स्वरूपं प्रातिकूल्यादात्मनः प्रतिकूलत्वादेव दुःखमित्यर्थः । प्रातिकूल्यं तु बाधनया जृम्भमाणत्वादिति बोध्यम् ॥ २३ ॥

## प्रलयो मोहः ॥ २४ ॥

## इति प्रकृतिपाठे तृतीयः प्रपाठः ॥ ३ ॥

---

प्रलयेति । प्रलयो लिङ्गदेहवृत्तीनाम् । अन्तःकरणस्य कारणावस्थानमिति यावत् । स चात्र सुषुप्तिमूर्च्छान्यतररूपः । तत्र सुषुप्तौ लयो नैसर्गिको मूर्च्छायां तु व्याहृतिहेतुको मृतिस्तु मूर्च्छावद्भाति तदानीं लिङ्गस्थस्य स्थूलाङ्गसंपर्कविरहेण बाह्यज्ञानविलयात् ॥ २४ ॥

इति प्रकृतिपाठे तृतीयः प्रपाठः ॥ ३ ॥

---

### अथ चतुर्थः प्रपाठः ।

---

सूक्ष्मभूतान्यपञ्चीकृतकार्याणि चोक्त्वा पुनः पञ्चीकृतान्याह—

## तमोभ्यः पञ्चीकृत्या पञ्च ॥ १ ॥

तमोभ्य इति । तमोभ्यस्तमोंशविशेषसमष्टेः पञ्चीकृत्या पञ्चीकरणेन पञ्च महाभूतानि व्योमादीन्यजायन्त । पञ्चीकरणं चोक्तम्—

शब्दादीनि द्विधा कृत्वा चतुर्धा पुनरादिमम् ।
स्वस्येतरद्वितीयांशैर्योजनात्पञ्च पञ्च ते ॥ इति ।

तथा चैकस्याष्टांशाः परेषां तु चतुर्णां द्वौ द्वावंशौ मिलित्वा पञ्चीकृतानि भवन्तीति भावः । तत्र च पूर्वपूर्वेण सहोत्तरोत्तरस्य संपर्कविशेषोऽस्ति

शब्दादीनां पूर्वपूर्वान्तर्वर्तित्वात्परपरस्येति मन्तव्यम् । पञ्चीकरणोत्तरं तु व्योम्नि विजृम्भमाणमखण्डं सत्स्वरूपमवकाशादित्वेन कल्प्यते । चिदानन्दयोस्तु तत्र भानं नास्ति तमःप्राधान्येन जाड्याधिक्यात् ॥ १ ॥

चक्षुरादिग्राह्यतार्थं पुनराह—

त्रिवृत्कृत्या त्रीणि पुनः ॥ २ ॥

त्रिवृदिति त्रिवृत्कृत्या त्रिवृत्करणेन त्रीणि तेजोजलक्षितिनामानि भूतानि पुनः स्थूलरूपाणि जायन्ते । त्रिवृत्करणं च—

द्विधा क्षित्यम्बुतेजांसि कृत्वाऽऽद्यांश्च पुनर्द्विधा ।
स्वस्वेतरद्वितीयांशैर्योजनात्ते त्रयस्त्रयः ॥ इत्युक्तम् ॥

तथा हि श्रूयते—तासां त्रिवृतं त्रिवृतमेकैकामकरोदिति । तथा च सत्येकस्याष्टांशाः परयोस्तु द्वयोश्चत्वारश्चत्वारोऽशा मिलित्वा त्रिवृत्कृतानि भवन्तीति भावः । एवं च तत्तद्भागयोः पुनः संश्लेषन्यूनाधिकत्वाभ्यां त्रिवृत्कृतानि बहुधा जायन्ते । तथाचोक्तं—

पुनस्त्रिवृत्कृताण्वूनां(?) मिथो न्यूनाधिकत्वतः ।
संनिवेशविशेषाच्च स्थूलानि तान्यनेकधा ॥ इति ।

तानि च तज्जननशक्तेर्निरुद्धवृत्त्या स्वोपादानभूतसूक्ष्मरूपतामाधातुं शक्नुवन्ति । तच्छक्तेः पुनः स्फुरद्वृत्त्या पूर्ववद्भवितुमर्हन्ति च । तद्वृत्तिश्च बहिर्व्यापारेणान्तः प्रक्रियया च जनयितुं शक्येति ॥ २ ॥

लोहितशुक्लकृष्णवन्ति च ॥ ३ ॥

लोहितेति । लोहितशुक्लकृष्णवन्ति रजःसत्वतमोयुक्तानि त्रीणि क्रमाद्भवन्तीत्यर्थः ।

ननु भूतानामन्योन्यव्यामिश्रत्वे कथमाकाशादिनामानि भवन्तीत्याह—

वैशेष्यात्तद्वादः ॥ ४ ॥

वैशेष्यादिति । वैशेष्यात्स्वस्वभावाधिक्यात्तद्वाद आकाशादिनामोल्लेख एतेन शब्दाधिक्ये सति पञ्चीकृतत्वमित्याकाशलक्षणम् । एवं वाय्वादेरपि बोध्यम् ॥४॥

अथ पञ्चानां पञ्चान्तक्रमाभिव्यक्तिः ॥ ५ ॥

अथेति । अथ पञ्चीकरणाद्यनन्तरं पञ्चानां शब्दादीनां पञ्चान्तक्रमाभिव्यक्तिः । पञ्चान्तक्रमेणैकद्वित्रिचतुष्पञ्चेति क्रमेणाभिव्यक्तिर्विशेषेणाऽऽविर्भावो व्योमादिषु भवतीत्यर्थः । तथा च गुणतत्कार्ययोर्योगवैचित्र्येण पञ्चीकृतात्त्रिवृत्कृताद्वा प्रपञ्चाच्छब्दादयो व्यञ्जन्ति । तत्रायं तद्विशेषः—

व्योम्नि प्रतिध्वनिः शब्दो वीसिवीसीति मारुते ।
अनुष्णशीतलः स्पर्शो वह्नौ भुगुभुगुध्वनिः ॥
उष्णस्पर्शो रक्तरूपमप्सु चुलुचुलुध्वनिः ।
शीतस्पर्शः शुक्लरूपं रसस्तु मधुरस्तथा ॥
क्षितौ कडमडादिर्वै शब्दः स्पर्शस्त्वकोमलः ।
नीलरूपं रसस्तत्र मधुरादिरनेकधा ॥
सुरभिपूतिगन्धौ द्वावेते निसर्गजा गुणाः ।
श्वेतत्वं शीतलत्वं च यच्चन्द्रमसि भासते ॥
तत्तत्र सलिलांशस्य मिश्रस्य प्रबलत्वतः ।
दिङ्मात्रमिदमत्रोक्तं स्वधर्मं जडवस्तुषु ॥
अन्यदप्यनुसंधेयं मनीषिभिः स्वसंविदा ॥ इति ।

यत्तु केचित्तेजसो रूपं शुक्लभास्वरमिति प्रलपन्ति तत्प्रत्यक्षविरोधाद्यदग्ने-रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां, यत्कृष्णं तदन्यस्येति श्रुतिविरोधाच्च मनस्विभिरुपेक्षणीयम् । ननु शब्दाद्युपादानकानामाकाशादीनां शब्दादयः कथं प्रतिक्षणं नानुभूयन्ते संनिकृष्टानां मृन्मयादीनां मृदादिवदितिचेन्न व्योमादिगतानां शब्दादीनां कर्मादिगतशब्दादिभिरेकीभूतत्वेन भेदाभानात् । यदा पुनस्तेषां प्रतिघातादिभिः कर्णादिगतेभ्यो भिन्नतयाऽवभासनं तदैवाऽनुभूतिस्तेषामित्यवधेयम् । तथा च । शब्दादीनामभिघाताद्युत्पन्नशक्त्या वह्निना क्षीरवत्पञ्चीकृतेषु विक्षोभमाणानां पुनः प्रसारणेनैव कर्णादिसंपर्काद्भाव्यतेति भाष्यम् ॥ ५ ॥

## संनिवेशादण्डानि ॥ ६ ॥

समिति । संनिवेशान्महाभूतानां भागसंश्लेषविशेषादण्डानि ब्रह्माण्डानीमान्यजायन्त । तथाच पैङ्गलश्रुतिः—जगद्योनिस्तमोगुणमधिष्ठाय सूक्ष्मतन्मात्राणि स्थूली कर्तुं सोऽकामयत सृष्टिपरिमितानि भूतान्येकमेकं द्विधा विधाय पुनश्चतुर्धा कृत्वा स्वस्वेतरद्वितीयांशैः पञ्चपञ्चधा संयोज्य पञ्चीकृतभूतैरनन्तकोटिब्रह्माण्डानि तत्तदण्डोचितचतुर्दशभुवनानि तत्तद्भुवनोचितस्थूलशरीराण्यसृजदिति । एतेन त्रिवृत्करणमप्याख्यातमन्यथा बाह्यान्तर्गतानां तेजः—प्रभृतीनां स्फुटतानुपयोगेन व्यवहारानर्हता स्यात् । एतेषामेव संयोगविभागधर्मादिमत्परमाणुरूपाणां शक्तिविशेषाविर्भावाद्विश्ववैचित्र्याणि जायन्ते । अत एव पुराणं वैश्वरूप्यात्प्रधानस्य परिणामोऽयमद्भुत इति । तत्र च पञ्चीकरणान्ता सृष्टिरीशस्यैव । ततः परं तु जीवस्यापीति गवेषणीयम् ।

न चास्य परमाणुरेवाऽऽरम्भको न पुनस्तत्प्रकृतिरभ्युपगम्येति कणभक्षाक्षपादाद्युक्तं युक्तमिति वाच्यं, संयोगस्याव्याप्यवृत्तित्वेन तस्मिन्निरवयवे तदसंभवात्। यद्यत्सगुणं सक्रियं वा तदनित्यं घटादिवदित्यादिव्याप्त्या परमाणूनामनित्यत्वावगमात्प्रागुक्तश्रुतिस्मृतिपुराणोक्तिविरोधाच्च। एतदुक्तं भवति—प्रागेकं ब्रह्मैवाऽऽसीद्ब्रह्मणो मूलप्रकृतिर्मूलप्रकृतेरव्यक्तमव्यक्तान्महन्महतोऽहंकारोऽहंकारात्पञ्चतन्मात्राणि पञ्चतन्मात्रेभ्यः सर्वेन्द्रियाणि प्राणाः पञ्चमहाभूतानि च पञ्चमहाभूतेभ्योऽखिलं जगदिति। अत्रायं निष्कर्षः—

प्रकृत्युन्मीलनं कालो जन्योत्पत्त्यादिहेतुतः।
दूरान्तादिधीहेतुत्वादवकाशो दिगुच्यते॥
प्राच्यादिनामिकाऽप्येषा व्यक्तिर्जातिमती स्मृता।
गुणानामाकृतिर्वाऽपि संस्थानं जातिरुच्यते।
भवत्येवं वृत्तिरिच्छा वृत्तिः कार्योन्मुखी कृतिः।
निवृत्तिरन्तरास्या चेत्प्रवृत्तिर्बहिरर्थिका॥
प्रतिहता प्रवृत्तिश्चेत्क्रोध इति च भण्यते।
प्रीतिप्रतिकूलश्चेतोविकारो द्वेष उच्यते।
इच्छाविरोधिनी वृत्तिः सैव द्वेषो निगद्यते॥
या योगध्वंसकृच्छक्तिरसौ विभागनामिका।
पतनाद्यनुकूला या शक्तिर्गुरुत्वमुच्यते॥
प्रतीतिभेदकृच्छक्तिः परिणामादिरीरिता।
सत्ताविरोधिनी शक्तिरभावनामिकोच्यते॥
तथाऽन्येऽपि पदार्था ये काणादन्यायसंमताः।
तेऽपि त्रिगुणतत्कार्यरूपा हि तत्तदाख्यया॥
लोकैर्व्यवह्रियमाणा वेदितव्या यथायथम्।
शक्तिबोधं विना कुत्र वस्तुनिरूपणे क्षमः॥
तत्तत्त्वं वेत्ति चेत्सर्वे भावाः स्युः करगाः स्वयम्॥ ७॥

## गुणगुणिभ्यां द्वौ प्रारम्भौ॥ ७॥

गुणेति। इह खलु प्रपञ्चेषु द्विविधाः परिणामा गुणपरिणामा गुणिपरिणामाश्च। तत्राऽऽद्या अव्यक्तमहदहंकारपञ्चतन्मात्रसर्वेन्द्रियप्राणाद्या द्वितीया अपञ्चीकरणगुणपञ्चीकृताद्या सर्वत्र परिणाम एव वेगक्रियाकर्षणादिनामा भवति। स च पञ्चीकृते विजृम्भमाणस्त्रिवृत्कृतेऽपि कार्यलिङ्गेनानुभूयते सर्वत्र स्वातन्त्र्येण व्याप्रियते च। सत्त्वसमष्टिपरिणामरू-

पान्तःकरणे पुनर्जृम्भमाणस्य सत्त्वादेः परिणामभेदो ज्ञानेच्छाद्वेषादिरूपो जायते । गुणव्यासक्तिर्हि काचनापौरुषेयहेतुना काचन वा पुरुषीयकृतिभेदेन पञ्चीकृतादौ जायमाना विचित्रव्यापारवत्तया भुवि भासते। अत एव पुरा ज्यौतिषिकैर्विनिर्णीता चलिष्णुविशेषाणां माध्याकर्षणी मार्तण्डस्थग्रहाकर्षणी च साधु संगच्छते । तेजोजगति तु संपर्कजा रजःपरिणतिरपञ्चीकृता तरसा विलसन्ती स्वाश्रयस्य कस्याप्ययस्कान्तादिधर्मं, यन्त्रयोगावधार्यं जनयति । एतद्विधा पुनः शाक्तेयी गौणायनी भौवसी चाभिहिता । अनयैव चुंबकीयवार्ताद्याविर्भावोऽपि भाव्यः । यथाऽऽहुः—

गुणवृत्तिरसंभूय संभूय चोपजायते ।
रजःसमष्टिश्चपला भूतसंपर्कतोऽसुवत् ।
यथेन्द्रियगणो लिङ्गैर्यन्त्रस्थ एव दीव्यति ।
गुणस्यान्यविकारोऽपि यन्त्रेणैव विचित्रकृत् ॥ इति ।

गुणिपरिणामश्च सर्वत्र गुणजृम्भणेनैव जायते । एवमन्यत्सर्वं स्वसंविदाऽनुसंधेयम् ॥ ७ ॥

**बीजशक्तिर्विस्फुरन्ती त्रिवृत्कृत्या चिनोत्यणीयसः ॥ ८ ॥**

बीजेति । बीजशक्तिगुणात्मका जन्यानामुपादानभूता विस्फुरन्ती वायवर्चिरादियोगेन संनिवेशरूपतामाप्नुवती । अणीयसः सूक्ष्मांशपुञ्जांस्त्रिवृत्कृत्या पञ्चीकृतेभ्यः प्रपञ्चेभ्यस्त्रिवृत्करणेन चिनोति तत्तदाकारं संनिवेशयतीत्यर्थः । तत्र च प्राणिनामन्नोपजीवित्वादन्नमेवाऽऽदिबीजं तदङ्गानामिति प्राकृतसर्गः * ॥ ८ ॥

जन्तूनामिहोत्पन्नानामपि प्रकृतिभेदोपचयात्समृद्धिरसमृद्धिर्वा भवितुमर्हतीति प्रपञ्चयन्नाह—

**मूर्धनीनविपरिणामः प्रकृतिपूर्तेः कीटवत् ॥ ९ ॥**

मूर्धनीनेति । मूर्द्धनीनविपरिणामो मूर्धनीनानां शीर्षस्थयन्त्राणां विपरिणामो विकृत्यन्तरोत्पत्तिः । कुतः प्रकृतिपूर्तेरवस्थान्तरोत्पादकशक्तेः पूरणात्कीटवत्कीटस्येव तैलपादेर्भ्रमरदष्टस्य । तथा च चिन्ताभेदेन कालभेदेन सङ्गादिभेदेन वा क्रमशः प्रकृतिविशेषोपचयान्मूर्धनीनविपरिणामेन कार्येन्द्रियविकारापादकेन जात्यन्तरमुत्पद्यते वल्मीक्यादीनां तु जातु प्रकृतिपूर्त्या पक्षोद्गमादिदर्शनादन्यथाऽपि विकृतिः संभवति प्राणिनामित्यवधेयम् । तथा च योगसूत्रं "जात्यन्तरपरिणामः प्रकृत्यापूरात्" इति । अत

* अत्र प्राकृतसृष्टिर्व्यष्टिसृष्टिस्तत्प्रक्रिया च वार्तिके द्रष्टव्या ।

एव डुण्डुभस्य बिले कुण्डलीकृतयावस्थितस्य कालभेदेन कुण्डलसंश्लेषप्राप्तेः स्थलकूर्माकारप्राप्तिरिति शुश्रुम । एतेन समाधिजादपि मूर्धनीनभेदादङ्गानामन्यथाभावो भवितुमर्हतीत्यपि सूचितम् । एवं च सति नन्दीश्वरनहुषादीनां देवतिर्यक्त्वोपाख्यानमपि संगच्छते । अत्रेदं बोध्यम्—गवाश्वादीनां यत्प्रकृष्टं ज्ञानं नैपुण्यं च नावलोक्यते तत् तन्मूर्धनीनस्य दौर्बल्यान्मनुजानामपि तथात्वं चेत्तथैवावलोक्यतामत एव चिन्ताचिकीर्षूणामपि न यावन्मूर्धनीनप्राबल्यं तावद्ध्यानधारा न संभवेदिति ॥ ९ ॥

प्राणिसृष्टेर्द्वैविध्यमाह—

**द्विधाऽसुमन्तः क्रमर्द्धीतरबीजाभ्याम् ॥ १० ॥**

द्विधेति । असुमन्तः प्राणिनः क्रमर्द्धीतरबीजाभ्यां क्रमोन्नतिक्रमावनत्योः शक्तिविशेषाभ्यांम् । तत्राऽऽद्यस्य बाहुल्यं भोगभूमौ, द्वितीयस्य तु कर्मभूमौ द्रष्टव्यम् । अत्र च मनुजेषु ये क्रमर्द्धिबीजिनस्तेषां प्रागवनतिर्ये च क्रमावनतिबीजिनस्तेषां प्रागुन्नतिरनुमीयतां वियति विहंगानामिवोर्ध्वाधोगामिनाम् । वैदिकानुष्ठानात्तु शक्यतेऽन्यथयितुमिन्दुगत्या सरिदिव बीजशक्तिरिति भारते वेदसमाचारः । ( क ) ॥ १० ॥

**तद्वतोर्युगानि व्यस्तैकक्रमाभ्याम् ॥ ११ ॥**

तद्वतोरिति । तद्वतोः क्रमर्द्धीतरबीजवतोर्व्यस्तैकक्रमाभ्यां व्युत्क्रमानुक्रमाभ्यां युगानि सत्यत्रेताद्वापारकलिसंज्ञकानि प्रतिभान्तीत्यर्थः । तथा च क्रमोन्नतिबीजिनां कल्यादिसत्यान्तानि क्रमावनतिबीजिनां तु सत्यादिकल्यन्तानि युगानि वर्तन्ते ॥११॥

तत्रापि प्राणिप्रकृतेर्वैचित्र्याज्जात्यादेर्नानात्वमाह—

**गुणेभ्यो भेदो जातिक्रियाकालानाम् ॥ १२ ॥**

गुणेभ्य इति । गुणेभ्यः सत्त्वरजस्तमोभ्यः संनिवेशविशेषापन्नेभ्यो भेदो नानात्वं केषां जात्यादीनाम् । अत्र जातिर्ब्राह्मणत्वादिः । यथा शुद्धसत्त्वेन ब्राह्मणः

---

(क) इन्दुगत्येति । यथा नैसर्गिकदक्षिणास्यतया प्रवहमाणाऽपि सुरसरिच्चन्द्रमसो गतिभेदेन पयोधिविक्षोभात्पुनरुत्तरस्यां वहति तथा कर्मभूभवानां निम्नाभिरुचिरपि चित्तनदी वैदिकानुसरणेन तदीयसत्त्वगुणविक्षोभात्प्रत्यावर्तते । तदुक्तं योगभाष्ये चित्तनदी नामोभयतोवाहिनी भवति कल्याणाय वहति पापाय चेति । अत एवोक्तं तत्वदर्शिभिः—कर्मभूमानवे न्यस्तं दिव्यज्ञानफलस्य यत् । बीजं तद्भूरि सुम्लानमसेकात्कृतिवारिण इति । तथा च वैदिकानुष्ठानाज्जायमानेन शक्तिविशेषेण विरुद्धशक्त्यभिभवादान्मोन्नतिर्भारतजन्मिनामित्युपपन्नम् । सा च कर्मभूमितो विशिष्यते विरोधिशक्त्यभिभवेन जायमानत्वान्मांसरोटिकाद्युपभोगेनोपचीयमानाच्छरीरबलान्नियुध्य नियुध्य जायमानं यद्बलं तदिवेति सिद्धान्तवार्तिकम् ।

सत्त्वाश्रयरजःप्राधान्येन क्षत्रियः । तमोगुणाश्रयरजःप्राधान्येन वैश्यः । रजोगुणाश्रयतमःप्राधान्येन शूद्रो जायते । एतदेव भङ्ग्याऽऽह श्रुतिः—ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायतेति । व्यक्तमाह स्मृतिः—चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः । एवं ब्राह्मणादिषु सत्त्वादीनां संग्रामो गुणविशेषेण सह नैसर्गिको जायते । यथाऽऽहुः—

सत्त्वस्य रजसा द्वंद्वं सत्त्वेन रजसस्तथा ।
रजसस्तमसा सार्धं तमसो रजसा क्रमात् ॥ इति ॥

ते च क्रमात्प्रशान्तैश्वर्येहामूढस्वभावास्तथा तत्र पारलौकिकैहिकानुरागयोः प्राधान्याद्देवासुरावपि बोद्धव्यौ । तथा च श्रुतिः—द्वया ह प्राजापत्या देवाश्चासुराश्च । स्मृतिश्च द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव चेति । तत्राऽऽसुरः पुनर्द्वेषहिंसाप्राबल्येन राक्षसोऽप्युच्यते । एवं च लोकानामिह कस्यचिदुच्चवर्त्मनि कस्यचित्कुपूयकर्मणि प्रवृत्तिदर्शनात्कथितश्रुतिस्मृतिभ्यां च प्रकृतिसिद्धैव जातिभिदा न काल्पनिकी । सा च भोगभूमावप्यस्ति परंतु तत्रत्यानां बीजपुरुषस्य तदानींतनविवेकशक्त्यस्फुरणेन तत्र जायमानेषु भूयसामेव रजःप्राबल्येन वैदिककर्मानुष्ठानविरहेण च नास्ति ब्राह्मण्यादिप्रविभागः कर्मभूवदिति मन्तव्यम् । क्रिया शमशौर्यकृषिसेवादिः । तत्र शमादिर्ब्राह्मणस्य, शौर्यादिः क्षत्रियस्य, कृष्यादिर्वैश्यस्य, सेवादिः शूद्रस्य । तथा च स्मृतिः—

शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ इत्यादि ।

कालः सत्यादिः । तथा चाऽऽहुः—

कालः सत्त्वाधिकः सत्यं त्रेता प्रोक्तो रजोधिकः ॥
तमःश्रितरजोदीप्तो द्वापरस्तामसः कलिः ।
श्वेतो रक्तः पीतः कृष्णो वर्णोऽप्येवं युगानुगः ॥ इति ॥१२॥

भावोद्भाऽनुन्यासम् ॥ १३ ॥

भावेति । अनुन्यासं गुणानां संनिवेशमनतिक्रम्य । भावोद्भा, आशयोन्मीलनम् । तथा च ब्राह्मणादीनां यादृशेनैव गुणविन्यासेन प्रकृतिर्जायते भावोऽपि तादृगेव स्फुरतीति भावः ॥१३॥

नोन्मेषश्चेत्स्ववृत्तेरन्यजातीयाः ॥ १४ ॥

नेति । स्ववृत्तेः स्वधर्मस्य गुणविन्यासवशाद्ब्राह्मणस्य शमादेः क्षत्रियस्य शौर्यादेर्वैश्यस्य कृष्यादेः शूद्रस्य सेवादेरुन्मेषः स्फुरणं चेन्न भवति तर्ह्यन्यजा-

तीया भिन्नजातीयास्ते भवन्तीत्यर्थः। तथा हि शमाद्यस्फूर्तौ शौर्यादिस्फुरणं चेत्तर्हि ब्रह्मकुलोत्पन्नोऽपि क्षत्रियजातीयः। यदि पुनः शौर्याद्यस्फूर्तौ शमादिस्फुरणं तर्हि क्षत्रियकुलोत्पन्नोऽपि ब्राह्मणजातीयः। एवं वैश्यशूद्रयोरपि बोध्यम्। ब्रह्माकारवृत्तेः प्राबल्ये तु विवर्णानामपि ब्राह्मण्यमाह श्रुतिः— वृत्तिस्थमपि चाण्डालं तं देवा ब्राह्मणं विदुरिति। अत एव विजृम्भितब्रह्मवृत्तीनां वाशिष्ठादिभिः पुनः परीक्षितानां गाधेयसूतादीनां भिन्नजातीयानामपि पुरा ब्राह्मणत्वमलंकृतमासीदितीतिहासः संगच्छते। एतस्मादपि रहस्यार्थाच्छास्त्रविरुद्धार्था बहुधा समाधेयाः। एवं च सति प्राणिप्रकृतेर्गुणमयत्वेन जात्वपि सत्त्वोद्रेकाद्भोगभूचराणामप्युद्गत्या शौचाचारादौ प्रवृत्तेर्नानुपयोगः ॥ १४ ॥

भावो दुर्वारः ॥ १५ ॥

भाव इति। भावः स्वभावः प्राणिनां जन्मान्तरकृतशुभाशुभसंस्कारो वर्तमानजन्मनि स्वकार्याभिमुखत्वेनाभिव्यक्तो दुर्वारो वारयितुमशक्यस्तस्य बलीयस्त्वादिति भावः ॥ १५ ॥

इदानीं पूर्वमस्थितस्योत्पत्तिं वारयति—

नासदुत्पद्यते नृशृङ्गवत् ॥ १६ ॥

नेति। असदविद्यमानं वस्तु। अत एव भगवानाह—नासतो विद्यते भावो नाभावो विद्यते सत इति ॥ १६ ॥

ननु विद्यमानस्यैव जायमानत्वे कार्यजातं जन्मनः प्राक्कुत्र तिष्ठतीत्यतस्तस्य कारणरूपतावस्थानं प्रमाणयति—

प्राक्तनं व्याप्त्यागमाभ्याम् ॥ १७ ॥

प्राक्तनमिति। प्रकृतिर्नामोपादानं यथा घटस्य मृत्स्ना पटस्य तूलकं तत्र वसति तदाकारतया तिष्ठतीति प्राकृतं घटादिकार्यं, जन्मनः प्राङ्मृदाद्याकारेण मृदादौ विराजतीति भावः। किंतज्ज्ञापकमित्यपेक्षायामाह—व्याप्त्यागमाभ्यामिति। तत्र व्याप्तिर्यद्धि यदात्मना यत्र न वर्तते न तत्ततो जायते यथा सिकताभ्यस्तैलमिति। आगमश्च। सदेव सौम्येदमग्र आसीत्स्वस्मिन्विलीनं सकलं जगदाविर्भावयति प्राणिकर्मवशादेष पटो यद्वत्प्रसारितस्तद्धीदं तर्ह्यव्याकृतमासीन्नामरूपाभ्यामेव व्याक्रियतासौ नामायमिदं रूपमित्यादिश्रुतिः। स्मृतिश्च—

> आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।
> अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥ इति मन्वादिः॥

अत एवोक्तं वाशिष्ठे—

फलपुष्पलतापत्रशाखाविटपमूलवान् ।
वृक्षबीजे यथा वृक्षस्तथेदं ब्रह्मणि स्थितम् ॥ इति ।

तथा च कारणत्वेन जगतामनादित्वं सादित्वं तु कार्यत्वेनेति बोध्यम् । एतेन कार्यकारणयोरुपादेयोपादानयोरनन्यत्वमपि वस्तुतो व्याख्यातम् । तथाहि पटस्तन्तुभ्यो न भिद्यते तद्धर्मत्वात् । अत्र यतो यद्भिद्यते तत्तस्य धर्मो न भवति । यथा गोऽश्वस्येति । एवं च सदेवाऽऽसीदसदेवाऽऽसीदिति श्रुत्यर्थयोर्मायानिमीलनोन्मीलनकालाभ्यामविरुद्धतैव तत्कालयोः क्रमात्प्रपञ्चस्य सदसत्पदवाच्यपुंप्रकृत्याकाराभ्यामेव विराजमानत्वात् । तत्रासत्पदस्य नामरूपाभ्यामव्याकृतमित्यर्थो वा । ये चात्राल्पदर्शिनः स्वपक्षरक्षणाय शङ्कामपनीय श्रुतिवाक्यस्थं मायाविद्याप्रकृतिपदमदृष्टादिपरमित्याचक्षाणा अभिमन्यन्ते, ते तावदजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । गुणमयी गुणसाम्याऽनिर्वाच्या मूलप्रकृतिरासीत् । मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगदित्यादिश्रुत्युक्तानि प्रकृतेरजत्वैकत्वत्रिगुणत्वजगदुपादानत्वादीनि नोत्पश्यन्ति । न खलु तस्यां जगन्मातरि तादृगपार्थाचरणेऽपि तेषामवद्यवादमुत्पश्यामः श्रुत्यनुरक्तिविरहेणाजधीत्वात् । ततश्च सर्वेषामेव जगतां परिणाम्युपादानं श्रुतियुक्त्यनुभवसिद्धम् । शून्यारम्भादिवादस्तु स्थितोऽपि न शास्त्रसिद्धान्तितः । यदि च प्रधानकारणवादोऽपि परमार्थतः श्रुतेरसंमत एव तथाऽपि लोकदृष्टौ तदभिमतत्वेन मन्वादिभिः परिगृहीतत्वाद्धर्मार्थे ग्रहीतव्यः । परमाण्वादिकारणवादस्तु श्रुत्यनभिमतत्वादन्यैः कैरपि शिष्टैरपरिगृहीतत्वाच्च धर्मकर्मणि नोपादेयः ॥ १७ ॥

ननु घटादिकार्यजातं प्रागुत्पत्तेर्मृदादौ स्थितं चेत्तर्हि कथं तत्र तन्नानुभूयत इत्याह—

## सतोऽप्यसंप्रयोगः प्रक्षीणत्वात्सान्याज्यवत् ॥ १८ ॥

सतोऽपीति । सतोऽपि प्रागुत्पत्तेः कारणाकारेण तिष्ठतोऽपि कार्यजातस्यासंप्रयोगश्चक्षुरादिसंनिकर्षो न भवति कुतः प्रक्षीणत्वादतीव सूक्ष्मत्वात्सान्याज्यवत् । यथा क्षीरे तिष्ठतोऽपि हविषः कारणव्यापारान्मन्थनादेः प्राग संनिकर्षस्तद्वदित्यर्थः ॥ १८ ॥

तद्भुत्पत्तिनाशौ कीदृशावित्याह—

उत्पत्तिरभिव्यक्तिः ॥ १९ ॥

उत्पत्तिरिति, अभिव्यक्तिः कारणव्यापारेण पीनतया प्रकाशः ॥ १९ ॥

नाशः कारणावशेषः ॥ २० ॥

नाश इति। कारणमुपादानं तदवशेषः कारणावशेषः प्रक्षीणतया पुनरवस्थानमित्यर्थः। स च द्विविधः परिणाम्यवशेषो विवर्त्यवशेषश्च। तत्र, आद्यो ध्वंसो द्वितीयो बाध एष एवाऽऽत्यन्तिको नाशः। प्रलये प्रकृतौ जीवानां लयस्तु नाऽऽत्यन्तिकः सर्गोत्पत्तौ पुनरुत्थानात् ॥ २० ॥

प्राग्वत्कल्पान्तरस्थाः ॥ २१ ॥

प्राग्वदिति। पूर्वस्मिन्कल्पे सूर्यादयो यथाऽऽसन्परस्मिन्नपि तथैवेत्यर्थः। तथा च श्रुतिः—सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्। दिवं च पृथिवीं चान्तरिक्षमथो स्वरिति। स्मृतिश्च—

युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ॥
तेषां ये यानि कर्माणि प्राक्सृष्ट्यां प्रतिपेदिरे।
तान्येव ते प्रपद्यन्ते सृज्यमानाः पुनः पुनः ॥
हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते।
तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते ॥
ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः।
शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः ॥ इति।

किंतु शक्तेर्नवनवोज्जृम्भणात्पूर्वपूर्वकालजातानामुत्तरोत्तरजन्मनि प्रकृत्याकृतिसंनिवेशादेः सर्वथा नैकरूपता स्यादित्यवधेयम् ॥ २१ ॥

ननु महाप्रलये ब्रह्मणि लीयमानायाः प्रकृतेः कुतः पुनः स्फुरणमित्याशङ्कायामाह—

स्फूर्तिरजायाः प्राचीनकर्मयोगाज्जागरवत् ॥ २२ ॥

स्फूर्तिरिति। अजायाः प्रकृतेः स्फूर्तिः पुनः स्फुरणं प्राचीनकर्मयोगाद्बीजभूतजीवादृष्टसंपर्काज्जागरवत्प्रसुप्तस्य पुनःप्रबोधवत्। तथा च प्रकृतितद्गुणतच्छक्तीनामवस्थे द्वे निमीलनमुन्मीलनं चेन्दुवदिति फलितम् ॥ २२ ॥

ननु पञ्चतन्मात्रादीनां परस्परवैलक्षण्यात्पदार्थान्तरता कुतो न स्यादित्याशङ्कमानं बोधयति—

नान्या विकृतिर्विवेकात् ॥ २३ ॥

नेति । विक्रियते या सा विकृतिरन्या प्रकृतितो भिन्ना नेत्यन्वयः । विवेकाद्विचारदृष्टेः । तथा हि घटाद्याकारमापन्नाऽपि मृन्मृदेव न सुवर्णादिः । अत एव श्रुतिः—वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति । इत्थं हि सिद्धान्तागमे कार्यकारणयोरभेदेऽपि जलतरङ्गवत्कथंचिद्भेदविवक्षयाऽऽश्रयाश्रयिभावव्यवहारः ॥ २३ ॥

इदानीमभावं विभजते—

द्वावभावौ संसर्गान्योन्याभावौ ॥ २४ ॥

द्वाविति । न हि कश्चिदभावो नाम पदार्थः स्वतन्त्रो वर्तते । किं त्वसौ सत्ताविरोधिशक्तिरेव यथा गृहाद्घटापनयनेन तत्र तत्सत्तारोधिनी शक्तिराविर्भवति पुनस्तदानयनेन ततस्तिरोधत्ते चेति ॥ २४ ॥

तत्र संसर्गाभावं विभजति—

चतुर्धाऽऽद्यो ध्वंसप्रागत्यन्तकेवलाभावभेदात् ॥ २५ ॥

चतुर्धेति । तत्र ध्वंसो नाशो यथा घटो ध्वस्तो भविष्यतीति प्रतीतिविषयो योऽभावः स प्रागभावो यथाऽस्मिन्भूतलादौ घटो भविष्यति । त्रैकालिकसंसर्गाभावोऽत्यन्ताभावो यथा नृशृङ्गं नास्ति नान्तरीक्षेऽग्निश्चेतव्यः । तेभ्योऽन्यो यः संसर्गाभावः स केवलाभावो यथा गृहे घटो नास्तीति ॥ २५ ॥

सापेक्षो द्वितीयः ॥ २६ ॥

सापेक्षेति । सापेक्षः प्रतियोग्यन्तरापेक्षो द्वितीयोऽन्योन्याभावो यथा घटो न पटादन्यो वा भेदादिशब्देनाप्ययमुच्यते । स चात्र कपालापेक्षया स्वगतो गृहान्तरीयघटापेक्षया सजातीयः । पटाद्यपेक्षया विजातीयश्च प्रतिभासते । अतोऽत्र द्वितीयः प्रतियोगी पटादिरिति स्मर्तव्यम् ॥ २६ ॥

सर्गाप्ययावभिवृत्तिभ्याम् ॥ २७ ॥

सर्गेति । सर्गाप्ययौ सृष्टिप्रलयावभिवृत्तिभ्यां बाह्यान्तराभिमुखवृत्तिभ्यां तथा च प्रकृतेर्यदा बहिःप्रवणवृत्तिस्तदा सर्गो यदा पुनरन्तःप्रवणवृत्तिस्तदाऽप्यय इति भावः ॥ २७ ॥

तत्र महाप्रलयमाह—

निमेषाद्विप्रलयः ॥ २८ ॥

निमेषादिति। निमेषात्प्रकृतेरस्फुरणाद्विप्रलयो व्युत्क्रमेण प्रलयः स्वकारणावस्थानं जगतामित्यर्थः। तथा च—स्वस्वकारणलयक्रमेण सर्वं जगत्प्रकृतौ प्रलीयते प्रकृतिरपि तदानीं ब्रह्मणि लीनेव भवतीति भावः। प्रलयस्य चातुर्विध्यमाह विष्णुपुराणम्—

नैमित्तिकः प्राकृतिकस्तथैवाऽऽत्यन्तिको द्विज।
नित्यश्च सर्वभूतानां प्रलयोऽयं चतुर्विधः॥
ब्राह्मो नैमित्तिकस्तत्र यच्छेते जगतः पतिः।
प्रयाति प्राकृते चैव ब्रह्माण्डं प्रकृतौ लयम्॥
ज्ञानादात्यन्तिकः प्रोक्तो योगिनः परमात्मनि।
नित्यं सदैव जातानां यो विनाशो दिवानिशम्॥ इति ॥२८॥

अत्र प्रकृतिपरिणामेन सृष्टिप्रपञ्चाख्यातत्वादयं प्रधानवादः स्यादित्याशङ्कां निराकरोति—

नाभिदायत्तिभ्यां प्रधानापादः ॥ २९ ॥

नेति। प्रधानापादः सांख्यशास्त्रीयप्रकृतिकारणवादापत्तिर्न भवति कुतोऽभिदायत्तिभ्यां पुरुषात्प्रधानस्यास्य पृथगस्तित्वविरहात्परतन्त्रत्वाच्च ॥ २९ ॥

नन्वद्वैतामृतवर्षिणी श्रुतिः किमर्थं सृष्ट्युत्पत्तिमवददित्यत आह—

विज्ञप्तये हि सर्गं जगौ जगौ ॥ ३० ॥

इति प्रकृतिपाठे चतुर्थः प्रपाठः ॥ ४ ॥

इति वैयासिके सिद्धान्तदर्शने वेदान्तविज्ञाने परापरतत्त्वनिरूपणे प्रथमः प्रकृतिपाठः ॥ १ ॥

---

विज्ञप्तय इति। विज्ञप्तये ब्रह्मणो ज्ञापनाय सर्गं सृष्टिप्रपञ्चं द्वैतप्रदर्शनमन्तरेण तदपेक्षस्याद्वैतप्रतिपादनस्य केनाप्यनर्हत्वादिति भावः। न पुनर्वस्तुधियेतिहेरर्थः। अत एव श्रुतिः—

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वा मुक्त इत्येषा परमार्थता॥ इति।

अत्र पदद्विरुक्तिः पाठसमाप्तिं द्योतयति।

श्रुतिस्मृतिपुराणानां युक्तेरप्येकतानतः।
तत्त्वं सिद्धान्तितं तस्मादिदं सिद्धान्तदर्शनम्॥ ३० ॥

इति प्रकृतिपाठे चतुर्थः प्रपाठः ॥ ४ ॥
इति वैश्वदेवे भाष्ये निरञ्जनाख्ये प्रथमः प्रकृतिपाठः ॥ १ ॥

अथ द्वितीयः पुरुषपाठः ।

तत्र प्रथमः प्रपाठः ।

प्रतिज्ञातयोः प्रकृतिं विस्तरेणाभिधाय पुरुषं पुनर्विशिष्य वर्णयितुं द्वितीयपाठमारभते—

## सच्चिदानन्दः पुरुषः ॥ १ ॥

सदिति । तत्र सत्केनाप्यबाध्यत्वेन कालत्रयेऽप्येकरूपेण विराजमानं वस्तु । चित्साधनान्तरनिरपेक्षतया स्वयंप्रकाशमानं स्वस्मिन्नारोपितसमस्तपदार्थावभासकं वस्तु । आनन्दो निरुपाधिरनुकूलवेदनीयो यश्चैतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुत्युक्तः । एतत्त्रितयात्मकः पुरुष इत्यर्थः। आनन्दं ब्रह्मणो विद्वानित्युक्तिस्तु भित्तेर्गात्रमितिवद्भेदविवक्षयैवेति बोध्यम् । अयमेव बृहत्त्वाद्बृंहणत्वाच्च ब्रह्मेत्युच्यते । तथा चोक्तम्— बृहत्वाद्बृंहणत्वाच्च विष्णुर्ब्रह्मेति गीयते। ननु प्रकृतिपरिणामेनैव सर्वसिद्धौ किं पुनः पुरुषाभ्युपगमेनेति चेन्न, तस्याः स्वाधिष्ठानमन्तरेण स्पन्दितुमप्यनर्हत्वात् । निरधिष्ठानभ्रमासिद्धेश्च । एतेन विज्ञानवादः पीवरधियामेवेति सूचितम् । अत्राऽऽहुः—

> सच्चित्सुखं नाम रूपं पञ्चैतेति चकासति ।
> पूर्वत्रिकं ब्रह्मरूपं जगद्रूपं परद्वयम् ॥
> त्रयाणामेकता बिम्बे प्रतिबिम्बे विचित्रता ।
> सतश्चिदात्मता बिम्बे निजाभासे जडात्मता ॥
> चितस्तत्प्रतिबिम्बेऽपि प्रतिभाति चिदात्मता ।
> सद्बिम्बस्थचिदाभासादानन्दानुभवो भवेत् ॥ इति ॥ १ ॥

ब्रह्मणः स्वरूपलक्षणमभिधाय तटस्थलक्षणमाह—

## प्रणवार्थः ॥ २ ॥

प्रणवेति । प्रणवार्थः प्रणवस्याकारोकारमकारनादबिन्द्वात्मकस्यार्थोऽभिधेयः। तथा च श्रुतिः-सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतदिति ॥ २ ॥

## नेतिनेत्यन्तः ॥ ३ ॥

नेतीति । नेतिनेत्यन्तो न तन्न तदिति निषेधावधिर्निषेधस्य सावधित्वात्तदवधिरेव पुरुष इत्यर्थः। तथा हि—न खलु घटपटादिनामानि दृश्यमा-

नानि कानिचिदपि वस्तूनि स्वरूपतो विद्यन्ते तेषां मृत्तूलाद्यविशेषात् । मृत्तूलादीनामपि भूतेभ्यः पार्थक्यं नास्ति तेषां तत्समष्टिरूपत्वात् । भूतान्यपि पञ्चतन्मात्रेभ्यो न भिद्यन्ते तेषां तत्परिणामरूपत्वात् । न वा पञ्च तन्मात्राणि परस्परं भिन्नान्यप्यहंकारादतिरिच्यन्ते तेषां तदुपादानकत्वात् । नाप्यहंकारः प्रकृतितो भिन्नस्तस्य तद्विकृतित्वात्प्रकृतिरपि स्वरूपतो नास्त्येव तिरोभावादिमत्त्वात् । नभोनीलिमरज्जुरजतमरीचिकेन्द्रजालादिवत् । तदवधित्वेन यदस्ति वस्तु तदेव पुरुषादिपदवाच्यं ब्रह्मेत्यवधेयम् ॥ ३ ॥

## त्रिकान्तभेदोनः ॥ ४ ॥

त्रिकेति । त्रिकान्तभेदोनस्त्रिविधपरिच्छेदशून्यस्त्रिविधभेदशून्यश्चेत्यर्थः । तथा हि नास्यदेशतः परिच्छेदो व्यापकत्वान्न कालतो नित्यत्वान्नापि वस्तुतः सर्वात्मकत्वात् । तथा तस्य स्वगतसजातीयविजातीयश्च भेदो नास्ति निरवयवत्वात्सजातीयद्वितीयाभावाद्विजातीयवस्तुविरहाच्च ॥ ४ ॥

तत्स्वरूपस्य प्रत्यक्षाद्यगोचरत्वं सहेतुकमाह—

## निरंशुद्विप्रमो नैर्धर्म्यात् ॥ ५ ॥

निरिति । निरंशुद्विप्रमो निरंशू निष्प्रभे द्वे प्रमे प्रत्यक्षानुमे यत्र स तथा । प्रत्यक्षानुमितिगोचरो न भवतीत्यर्थः । कुतो नैर्धर्म्यात् । जातिगुणक्रियाद्यभावात् । अत एव श्रुतिः—निर्विकल्पमनन्तं च हेतुदृष्टान्तवर्जितम् । अप्रमेयमनाद्यं च यज्ज्ञात्वा मुच्यते बुधः । नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठेति ।

स्मृतिश्च—अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् ।
प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणम् ॥ इति ॥ ५ ॥

## त्रीण्यतीतः ॥ ६ ॥

अत एव त्रीणीति । त्रीणि स्थानानि जाग्रत्स्वप्नसुषुप्तिरूपाणि स्थूलसूक्ष्मकारणरूपाणि वाऽतीतोऽतिक्रम्य स्थितस्तुरीय इत्यर्थः । तथा च श्रुतिः—प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्त इति । तत्र च बाह्येन्द्रियैरर्थोपलब्धिर्जागरितं, बाह्येन्द्रियविलये केवलान्तःकरणैरुपलब्धिः स्वप्नः, सर्वेन्द्रियविलये कैवलाज्ञानवृत्त्योपलब्धिः सुषुप्तिः । तत्र विषयाः क्रमात्स्थूलसूक्ष्मकारणरूपा वेदितव्याः । ततश्च जाग्रत्स्वप्नसुषुप्तयः सत्त्वरजस्तमोभ्यः क्रमाज्जायन्ते । जायमानासु तासु पुनः सत्त्वादयः प्रतिभान्ति च । जाग्रत्स्वप्नयोस्तु प्रकृतिभूतं तमोऽभिभूय

जायमानत्वात्तयोर्निमीलनेन पुनस्तदेव तमो विराजतीति सुषुप्तिर्भवति । तदेवावस्थात्रयं मलिनसत्त्वानां प्रकृतिसात्संपद्यते शुद्धसत्त्वानां तु स्वतन्त्री भवतीति । अत्र पुरुषस्य स्वप्रकाशमानत्वेन घटादिवत्स्फुरणायोगात्स्थानत्रयातीतत्वमुक्तम् । अत एव श्रूयते—विज्ञातारमरे केन विजानीयादिति । समाधौ तु बुद्धेरप्यभानेन सर्वावरणविलयान्मेघमुक्तमार्तण्डवदसौ स्वयमेवोदेति । अत एवोपदिशति श्रुतिः साक्षात्कर्तव्यश्चेति ॥ ६ ॥

संप्रत्येतस्यैव निमित्तत्वमुपादानत्वं च प्रतिपादयन्नाह—

## निमित्तमभिध्यादित्वात् ॥ ७ ॥

निमित्तेति । निमित्तं तदाख्यं कारणं भूतभौतिकानामिति शेषः । कस्मादभिध्यादित्वात् । सर्गे तस्याभिध्यानपूर्वकत्वात् । तथा हि श्रूयते-सोऽकामयत बहु स्यां प्रजायेय स ऐक्षत लोकान्नु सृजा इति ॥ ७ ॥

## प्रकृतिश्च प्रतिज्ञादृष्टान्तैक्यश्रुतिभ्यः ॥ ८ ॥

किंच प्रकृतिश्चेति । प्रकृतिरुपादानम् । अत्र हेतुत्रयमाह-प्रतिज्ञेति । तत्र प्रतिज्ञा कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीत्येकविज्ञानेन सर्वविज्ञानार्था । दृष्टान्तः-यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति । ऐक्यश्रुतिश्च सर्वं खल्विदं ब्रह्म सर्वात्मकं च परं ब्रह्म ब्रह्मैवेदं सर्वमित्यादिः । अत एव भगवान्स्मरति-विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् । वासुदेवः सर्वमिति । मनुरपि—सर्वभूतेषु चाऽऽत्मानं सर्वभूतानि चाऽऽत्मनि । समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छतीति । पुराणं च—वासुदेवात्मकं सर्वं जगत्स्थावरजङ्गमम् । आब्रह्मस्तम्बपर्यन्तं तस्मादन्यन्न विद्यत इति । ब्रह्मणस्तु प्रकृतित्वं स्वोपाधिद्वारेण विवर्तद्वारेण वेति बोध्यम् ॥ ८ ॥

ब्रह्मणो विश्वरूपत्वे भोक्तुर्भोग्यत्वं भोग्यस्य च भोक्तृत्वं स्यादित्यापद्यमानं बोधयति—

## भागादिस्तु सिन्धुवत् ॥ ९ ॥

भागादिरिति । तुरापत्तिनिरासकः । भागो भोक्तृत्वभोग्यत्वादिलक्षणः, सिन्धुवत् । यथा लोके सिन्धोरुदकात्मनोऽनन्यत्वेऽपि तद्विकाराणां फेनतरङ्गबुद्बुदादीनामितरेतरविभागः परस्परसंश्लेषादिलक्षणव्यवहारश्चोपलभ्यते तद्वदित्यर्थः । एवं च विश्वस्य वस्तुतो ब्रह्मात्मकत्वाच्छ्रुतौ ब्रह्माधिकारे प्रयुक्तस्य प्राणाकाशादिशब्दस्यापि ब्रह्मबोधकत्वमविरुद्धम् ॥ ९ ॥

ननु अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठतीत्यादिश्रुतौ सर्वगतस्य तस्य कथं परिमाणोपदेश इत्याह—

मानाम्नायो हृदो युवत् ॥ १० ॥

मानेति। मानाम्नायोऽङ्गुष्ठपरिमाणोपदेशो हृदो हृदयात्तल्लक्षीकृत्येत्यर्थः। युवत्। यथा वंशपर्वस्थमाकाशमरत्निमात्रवद्भाति तद्वत्। तथा च नराणामेव श्रुत्यधिकारात्तेषां हृन्मानेनाङ्गुष्ठमात्रत्वमुक्तमित्याशयः॥ १०॥

ननु पुरुषस्य जगत्कारणत्वे केवलो निर्गुणश्चाकर्ता चैतन्यं चिन्मात्रं सदित्यादिश्रुतेः का गतिरित्यतस्तस्य निमित्ततां विशेषयति—

हेतुः प्रचोदनात् ॥ ११ ॥

हेतुरिति। प्रचोदनात्प्रकृतेः प्रेरणात्तथा च यथा प्राड्विवाकामात्यादिभिर्नियोज्यैर्निष्पद्यमानानामेव कर्मणां कर्ता राजेति तद्वदित्यर्थः।

अत एव मन्त्रः-अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः। इति ॥ ११॥

तस्य दण्डचक्रकुलालादीनामिव हेतुतां वारयति—

नो स्वस्मादलेपत्वात् ॥ १२ ॥

नो इति। स्वस्मात्स्वरूपतो नो हेतुरित्यन्वयः। कुतोऽलेपत्वात्क्रियाद्यसंपर्कान्निर्लेपस्य कारणत्वानुपयोगादिति भावः। अत एव श्रुतिः-न तस्य कार्यं करणं च विद्यते न तत्समश्चाप्यधिकश्च दृश्यते। पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति ॥ १२॥

ननु पुरुषस्य निर्लेपत्वे कथमसौ प्रकृतिं व्यापारयतिं तस्यै तत्क्रियतामिति प्रेरणाविरहादित्याशङ्कमानं पुनरपि दृष्टान्तेन बोधयति—

प्रद्युदिवाऽऽयुक्तौ ॥ १३ ॥

प्रद्युदिति। प्रद्युद्भानुरायुक्तौ व्यापारे व्यापरश्च गुणानां मिथः संपर्कः संनिवेशविशेषो वा। स च क्वचिन्निमित्तस्य क्वचिदुपादानस्यापि धर्मः। तथा च यथा सविता न स्वयं किंचित्करोति न वा कारयति किंतु तदुदयेन लोकानां व्यापृतौ सामर्थ्यमुद्भवति, प्रकृतेर्व्यापारे पुरुषोऽपि तद्वदिति भावः। एतदुक्तं भवति सर्वत्र हि हेतुकर्ता पुरुषः सवितृवत्साक्षात्कर्त्री प्रकृतिर्लोकवत्कर्तृत्वं च पुरुषस्य मुख्यं स्वतन्त्रत्वात्। प्रकृतेः पुनर्गौणं पुरुषतन्त्रत्वाद्व्यवहारे तु पुरुषस्य व्रद्गौणं प्रकृतेर्मुख्यं राजप्रेष्यवत्। अत एव प्रकृतिः प्रधानमित्युच्यते। एवं च

ऋतं पिबन्तौ सुकृतस्येत्यादिश्रुतयोऽपि न विरुध्यन्ते । पुरुषस्य भाक्तभोक्तृत्वादिसंभवात् ॥ १३ ॥

ननु पुरुषस्य तथात्वे गुणबोधकश्रुतीनां का गतिरित्यतस्ताः समन्वयति—

## सगुणार्था गुणश्रुतयः ॥ १४ ॥

सेति । गुणश्रुतयः सत्यकामः सत्यसंकल्प इत्यादयः सगुणार्थाः सगुणब्रह्मविषयाः । तथा च द्वे ब्रह्मणी परापरे निर्गुणगुणवती निरुपाधिसोपाधिके निराकारसाकारे वा वेदितव्ये ॥ १४ ॥

## चतुष्पात् ॥ १५ ॥

चतुष्पादिति । चतुष्पाच्चत्वारः पादा यस्येति विग्रहः । तस्य पादत्रयं जडं स्थूलसूक्ष्मकारणरूपं, भूर्भुवःस्वरात्मकं चतुर्थं तु जडातीतं विद्यात् । तथा च श्रुतिः स्थूलभुग्वैश्वानरः प्रथमः पादः, प्रविविक्तभुक्तैजसो द्वितीयः पादः, आनन्दभुक्चेतोमुखः प्राज्ञस्तृतीयः पादः, प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्त इति ॥ १५ ॥

## विश्वाराडप्याराात् ॥ १६ ॥

विश्वाराडिति । विश्वेषु ब्रह्मादितृणपर्यन्तेषु राजतीति विश्वाराट् । तादृशोऽप्याराद्दूरे सत्त्वशुद्धिं विनाऽनुभाव्यत्वायोगादिति भावः ॥ १६ ॥

## तर्केण सताऽऽप्यः ॥ १७ ॥

तर्केणेति । तर्केणाऽऽपत्त्या शास्त्रार्थमालोच्य स्वबुद्ध्या कल्पनोपन्यासेनेति यावत् । सता श्रुत्यविरोधिना । आप्यः प्राप्यः । तथा च तर्केण विना वस्तुतत्त्वं बुद्धौ नाऽऽरोहतीति तर्कोऽपेक्ष्येत किं त्वसौ ब्रह्मणि श्रुत्यविरोधेनैव कार्य इत्यभिप्रायः । सतेत्यनेन श्रुत्यननुकूलतर्केण नाऽऽप्योऽयमिति सूचितम् । एतेन तर्को द्विविधः श्रौतो लौकिकश्च तद्भेदात्तार्किकोऽपि तथा । तत्र यः प्राधान्येन श्रुतिमेव प्रतिपादयति स श्रौतोऽन्यो लौकिकः ॥ १७ ॥

## नैकष्यं क्लेशापनूदनलवत् ॥ १८ ॥

नैकष्यमिति । नैकष्यं पुरुषे मनसः संनिधानं क्लेशापनुत्क्लेशानविद्यादिपञ्चकानपनुदतीत्यर्थः । किमिवानलवद्यथाऽग्निनैकष्यं स्वत एव शीतमपनयति तद्वत् ॥ १८ ॥

तदन्यतमेन योगानाम् ॥ १९ ॥

तदिति । तन्नैकष्यं योगानां ज्ञानध्यानेश्वरार्पितकर्मण्येकमात्रावलम्बनापादकत्वादैक्यसंपादकत्वाद्वा योगास्तेषामन्यतमेन ज्ञानेन ध्यानेनेश्वरार्पितकर्मणा वा जायत इत्यर्थः ॥ १९ ॥

मात्रा हि त्रयाणामितरत्र ॥ २० ॥

मात्रा इति । त्रयाणां सच्चिदानन्दानां मात्रा अंशा एवेतरत्र भूतेषु वर्तन्त इत्यर्थः । तथा च भूतेषु ये सच्चिदानन्दा वर्तन्ते ते प्रतिबिम्बभूता एवेति तात्पर्यम् ॥ २० ॥

व्यनक्त्येकं तामसे ॥ २१ ॥

व्यनक्तीति । एकं सच्चिदानन्देषु सत्स्वरूपं तामसे पञ्चीकृते मृदादौ व्यनक्तीत्यर्थः ॥ २१ ॥

द्वे वृत्तौ द्वयोः ॥ २२ ॥

द्वे इति । द्वयो रजस्तमसोस्तत्र रजसो वृत्तौ कामक्रोधादौ तमसो वृत्तौ च शोकालस्यादौ द्वे सच्चिद्रूपे व्यङ्क्त इत्यर्थः ।

यद्यपि घटो भाति पटो भातीति घटादावपि चिदवभासते तथाऽप्यसौ जडत्वेनैव न तु चिद्रूपेणेति विशेषः ॥ २२ ॥

त्रीण्यवदातस्य ॥ २३ ॥

त्रीणीति । अवदातस्य सत्त्वस्य वृत्तौ विवेकवैराग्यादौ त्रीणि सच्चिदानन्दरूपाणि व्यञ्जन्तीत्यर्थः ॥ २३ ॥

तत्त्रयाणामितरेतरभेदं निराकरोति—

त्रितेतरेक्षात् ॥ २४ ॥

त्रितेति । त्रिता त्रैविध्यं सच्चिदानन्दानां परस्परपार्थक्यमितरेक्षाद्व्यवहारदृष्टेः । एतदुक्तं भवति—भेदकोपाधिविरहे त्रयाणामैक्यं विद्वदनुभवसिद्धम् । एतेन सच्चिदानन्दाः प्रतिबिम्बरूपा एव भिद्यन्ते सोपाधित्वान्न तु बिम्बभूता निरुपाधित्वादिति सूचितम् ॥ २४ ॥

भक्तिरारम्भात् ॥ २५ ॥

इति द्वितीयपुरुषपाठे प्रथमः प्रपाठः ॥

भक्तिरिति । भक्तिः पुरुषानुरक्तिरारम्भादारभ्यते यः स आरम्भः कर्म, यच्च स्ववर्णाश्रमविहितमिह जन्मनि जन्मान्तरे वाऽनुष्ठितं तस्मादित्यर्थः । एतेन स्ववर्णाश्रमाचाराननुष्ठायिनां या भगवत्प्रीतिः प्रेमाभास एव स इत्यवगन्तव्यम् ॥ २९ ॥

इति द्वितीयपुरुषपाठे प्रथमः प्रपाठः ॥

---

अथ द्वितीयः प्रपाठः ।

वक्ष्यमाणजीवब्रह्मैक्यलक्षणविषयं प्रतिपादयितुमादौ तस्य सच्चिदानन्दरूपपुरुषस्याऽऽत्मत्वं साधयति—

सर्वान्तरत्वादात्मा ॥ १ ॥

सर्वेति । पुरुष एवाऽऽत्मा भवितुमर्हति कस्मात्सर्वान्तरत्वात्सर्वेषां प्रकृतिपर्यन्तानामन्तर्वर्तित्वात् । यो नाऽऽत्मा नासौ सर्वान्तरो भवति यथा घटादिरिति केवलव्यतिरेकी ॥ १ ॥

किंच—

परप्रेमास्पदत्वात् ॥ २ ॥

परेति । परप्रेमास्पदत्वात्परमस्नेहाश्रयत्वात् । अत एव श्रुतिः—प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मेति ॥ २ ॥

किंच—

स्वतोऽभिरुचेः ॥ ३ ॥

स्वत इति । स्वतोऽभिरुचेः सच्चिदानन्देषु स्वारसिकप्रवृत्तिदर्शनादिति भावः ॥ ३ ॥

किंच—

स्वानुभवाच्च ॥ ४ ॥

स्वेति । स्वानुभवश्च, अहमस्मि, सदा भामि, भवाम्यहं, स्वतः सुखीति समाधिकालीनो वा ॥ ४ ॥

तदात्मत्वं व्यतिरेकमुखेन(ण) द्रढयति—

न कोशो जडत्वात् ॥ ५ ॥

नेति । कोशः स्थूलसूक्ष्मकारणरूपो देहो नाऽऽत्मा भवितुमर्हति, कस्माज्जडत्वात्स्वतःप्रकाशशून्यत्वाद्विनाऽऽश्रयेण स्पन्दितुमप्यनर्हत्वादिति भावः ॥ ५ ॥

किंच—

तदभानेऽपि तद्भानात् ॥ ६ ॥

तदिति। तद्भानेऽपि स्वप्नसुप्तिसमाधिषु क्रमात्कोशत्रयाप्रतीतावपि तद्भानादात्मभानात्स्वप्नादौ स्थूलादिदेहभानविरहेऽपि तद्भङ्गे तदानीं नाहमासमित्यप्रतीतेरिति भावः ॥ ६ ॥

किंच—

विचारबाधबल्याम्नायोपपादानुभूतिभ्यश्च ॥ ७ ॥

विचारेति। विचारेण बाधात्प्रबलागमात्प्रबलयुक्तेः प्रबलानुभवाच्च कोशो नाऽऽत्मेत्यन्वयः। तथा हि आत्मा वै जायते पुत्र इति श्रुतेः स्वस्मिन्निव स्वपुत्रेऽपि प्रेमदर्शनात्पुत्रे पुष्टे नष्टे वाऽहमेव पुष्टो नष्टो वेत्यनुभवाच्च। पुत्र एवाऽऽत्मेत्यतिप्राकृताः। स वा एष पुरुषोऽन्नरसमय इतिश्रुतेर्दह्यमानगृहादितः स्वपुत्रं हित्वा निर्गमदर्शनात्स्थूलोऽहं कृशोऽहमित्यनुभवाच्च स्थूलशरीरमेवाऽऽत्मेति चार्वाकाः। ते ह प्राणाः प्रजापतिं समेत्य ब्रूयुरितिश्रुतेरिन्द्रियाणामभावे शरीरचलनायोगात्काणोऽहं बधिरोऽहमित्यनुभवाच्चेन्द्रियाण्येवाऽऽत्मेति परे चार्वाकाः। अन्योऽन्तरात्मा प्राणमय इति श्रुतेः प्राणाभाव इन्द्रियचलनायोगादहं बुभुक्षुरहं पिपासुरित्यनुभवाच्च प्राण एवाऽऽत्मेत्यन्ये चार्वाकाः। अन्योऽन्तरात्मा विज्ञानमय इतिश्रुतेर्बुद्धेरभावे करणशक्त्यभावादहं बोद्धाऽहं भोक्तेत्यनुभवाच्च बुद्धिरेवाऽऽत्मेति बौद्धाः। अन्योऽन्तरात्माऽऽनन्दमय इतिश्रुतेः सुषुप्तौ बुद्ध्यादीनामज्ञाने लयदर्शनादहमज्ञ इत्यनुभवाच्चाज्ञानमेवाऽऽत्मा, तस्य च जाग्रति स्वादृष्टवशान्मनसा योगे ज्ञानेच्छादयो जायन्ते, सुषुप्तौ तु तल्लयाल्लीयन्ते च। स पुनश्चितिमत्त्वाच्चेतनो गुणवत्त्वाद्द्रव्यं धर्माधर्मयोः कर्ता सुखदुःखयोर्भोक्ता च तस्य विभुत्वेऽपि कर्मवशाल्लोकान्तरगमनादिव्यवहार इति प्राभाकरास्तार्किकाश्च। प्रज्ञानघन एवाऽऽनन्दमय आत्मेतिश्रुतेः सुषुप्तौ खद्योतवत्प्रकाशाप्रकाशसद्भावान्मामहं न जानामीत्यनुभवाच्चाज्ञानोपहितचैतन्यमेवाऽऽत्मेति भट्टाः। असदेवेदमग्र आसीदितिश्रुतेः सुषुप्तौ सर्वाभावादहं तदा नाऽऽसमित्यनुभवाच्च शून्यमेवाऽऽत्मेति केचन बौद्धाः। वस्तुतस्तु प्रत्यगस्थूलोऽचक्षुरप्राणोऽमना अकर्ता चैतन्यं चिन्मात्रं सदित्यादिप्रबलश्रुतेः

तत्रैवं सति कर्तारमात्मानं केवलं तु यः।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥

इत्यादिप्रबलस्मृतेश्च पूर्वपूर्वोक्तश्रुतियुक्त्यनुभवाभासानामुत्तरोत्तरोक्तश्रुतियुक्त्यनुभवाभासरैर्यात्मबाधदर्शनात्पुत्रादिजडवस्तूनां चैतन्यभास्यत्वेन गुणा-

दिमत्त्वेन च घटादिवदनित्यत्वावगमादहं ब्रह्मेति विद्वदनुभवप्राबल्याच्च तत्तावत्पुत्रादिशून्यपर्यन्तमखिलमनात्मैव किंतु तत्तदवभासकं नित्यशुद्धमुक्तस्वभावं प्रत्यक्चैतन्यमेवाऽऽत्मतत्त्वमिति श्रुतिशिरःसिद्धान्तः ॥ ७ ॥

ननु पुत्रदेहादीनामनात्मत्वे कुतस्तानात्मत्वेन श्रुतिः स्वयं प्रतिपादयतीत्यत आह—

गौणोक्तिर्मुख्याय ॥ ८ ॥

गौणोक्तिरिति । गौणोक्तिः श्रुतिभिर्गौणात्मप्रतिपादनं मुख्याय प्रधानमात्मानं प्रतिपादयितुं स्थूलदर्शनस्यारुन्धतीक्षणन्यायेन सूक्ष्मदर्शनोपायत्वादिति भावः ॥ ८ ॥

इदानीमात्मानमेव प्रियमुपासीतेतिश्रुतिसिद्धात्मोपासनाय तदर्थैव सर्वा प्रीतिरिति दर्शयति—

प्रीतयस्तत्कृते ॥ ९ ॥

प्रीतय इति । अस्मिन्धनपुत्रकलत्रादौ याः प्रीतयोऽनुरक्तयस्तास्तत्कृते साक्षात्परम्परया वाऽऽत्मार्था एवेत्यर्थः । तथा हि श्रूयते—न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय सर्वं प्रियं भवतीति ॥ ९ ॥

नन्वात्मनः परमानन्दत्वे कथं नासौ प्रतिभातीति चेत्तत्राऽऽह—

कुतश्चिदभानवत्सहोक्तवत् ॥ १० ॥

कुतश्चिदिति । कुतश्चित्प्रतिबन्धादविद्याकार्यरूपादभानवत्प्रतीतावपि विशेषेणाप्रतीतिः । सहोक्तवद्यथा युगपद्व्याहारे पुत्रादिध्वनिस्तद्वदित्यर्थः । सहोक्तौ पुत्रादिनिःस्वने युगपदभिव्याहार एव प्रतिबन्धको बोध्यः ॥ १० ॥

कदा तत्प्रतीतिः स्यादित्यपेक्षायामाह—

द्वैतविस्मृतेरभिव्यक्तिः ॥ ११ ॥

द्वैतेति । द्वैतविस्मृतेर्निरोधसमाधावज्ञानकार्यस्य समस्तस्य विस्मरणादभिव्यक्तिर्निजानन्दस्य भानं भवतीत्यर्थः । तथा च श्रुतिः—यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टति तामाहुः परमां गतिमिति । उक्तं च—

> न द्वैतं भासते यत्र मायाकार्यं कथंचन ।
> यत्सुखं भाति तत्रैनं ब्रह्मानन्दं प्रचक्षते ॥ इति ॥

सुषुप्तिकालीनसुखस्य तु प्रतिबिम्बरूपत्वेऽपि परिच्छिन्नब्रह्मानन्दतैव । तदानीमज्ञानतरङ्गविलयेन तस्य तेन सह भेदभानानर्हत्वात् । स्वच्छस्थानन-

बिम्बवत् । तथा च समाधौ जीवस्य ब्रह्मानन्दरूपता, सुषुप्तौ तु तद्‌भोक्तृतेति स्थितम् ॥ ११ ॥

नन्वेकमेवाद्वितीयं नेह नानाऽस्ति किंचनेत्यादिश्रुतिभिः पुरुषैकत्वोपलब्धेर्द्वितीयाभ्युपगमेनालमित्याह—

## सापेक्षत्वाद्‌द्वितीयः ॥ १२ ॥

सापेक्षत्वादिति । सापेक्षत्वात्पुरुषस्य सच्चिदानन्दरूपत्वेन तदितरापेक्षत्वात् । सदसतोर्ज्ञानाज्ञानयोः सुखदुःखयोश्च परस्परसापेक्षतयैव भासमानत्वादित्यर्थः । द्वितीयः पुरुषादन्यः कश्चित्पदार्थोऽसन्मायादिपदवाच्योऽभ्युपेय इति शेषः । अत एवासदेवेदमग्र आसीदितिश्रुतौ मायापरपर्यायमसद्धित्युक्तम् ॥ १२ ॥

किंच—

## लौकिकार्थश्च ॥ १३ ॥

लौकिकेति । लौकिकार्थः प्रमाणप्रमेयव्यवहारार्थोऽन्यथा मूढबुद्धीनां प्रत्यक्षसिद्धस्य घटोऽयं पटोऽयमित्यादिव्यवहारस्यानिष्पत्तेरिति भावः । तथा च द्वैतस्य पृथगस्तित्वविरहेण बाध्यत्वेन च तात्त्विकत्वाभावादद्वैतत्वसिद्धिरिति बोद्धव्यम् ।

अत एवाऽऽहुः—

पुरुषसत्तयैवेदं सत्तावत्प्रकृतेरपि ।
स्वतःसत्ताविहीनत्वाद्‌द्वैतत्वं न हि शङ्‌क्यताम् ॥ इति ॥ १३ ॥

तस्मात्प्रतीयमानयोर्नामरूपयोर्वाङ्मात्रनिष्पद्यमानत्वमाह—

## गिरैव नामरूपे ॥ १४ ॥

गिरीति । गिरैव वचस्येव नामरूपे विराजतो न तु वस्तुतो विद्येते इत्यर्थः । तथा च श्रुतिः—वाचारम्भणं विकारो नामधेयमिति । एतेन ब्रह्मब्रह्माण्डयोर्हेतुहेतुमद्भावो न तात्त्विकः किं त्वौपाधिक एवेति सूचितम् ॥ १४ ॥

ननु तत्त्वस्याद्वैतत्वे कथमागमो भूतभौतिकादिप्रपञ्चं प्रतिपादयतीत्याह—

## द्वैतिभ्यो ह्यागमवृत्तिः ॥ १५ ॥

द्वैतिभ्य इति । द्वैतिभ्यो द्वैतवासनाविशिष्टेभ्यस्तानेव बोधयितुमित्यर्थः । आगमवृत्तिः शास्त्रप्रवर्तनम् । अत एव कालाभावेऽपि सदेव सौम्येदमग्र आसीदित्यत्र यदग्रशब्दाभिधानं तदपि कालवासनावन्तं प्रत्येवेति बोध्यम् । किंच प्रकृत्तिनिमीलनस्यापि कालत्वाभ्युपगमात्सर्गादौ प्रकृतेर्ब्रह्मानतिरेकेऽपि कथंचन

भेदधियैव तदुक्तिरित्यविसंवादः । एवं चाद्वैतवादे को गुरुः कः शिष्यः किं शास्त्रमित्यादिवितर्कविजृम्भणं किंचिज्ज्ञानां प्रातिभासिकान्यपि व्यवहारदशायां पारमार्थिकवद्भान्तीति रहस्यमजानतामेव मोहफलमित्यवधेयम् ॥१५॥

श्रुतेः कारुणिकत्वमाह—

## जागर्यायै चिरसुप्तानां श्रुतिरम्बावत् ॥ १६ ॥

जागर्याया इति । चिरसुप्तानां दीर्घकालमविद्यानिद्राभिभूतानां जागर्यायै मोहभङ्गाय श्रुतिरम्बावज्जननीव वर्तते । यथा माता दीर्घनिद्राभिभूते स्तनपायिनि शुष्ककण्ठतालुकताशङ्कया तस्य जागराय यतते श्रुतिरपि तद्वदिति भावः । अत एवासौ काव्यात्मिकाऽपि । तथा च न्यायः—वेदयितुं रहस्यार्थं याति काव्यात्मतां श्रुतिरिति ॥ १६ ॥

इदानीमद्वैतब्रह्मबोधकश्रुतिवाक्यस्यार्थान्तरपरताशङ्कां निराकरोति—

## नैक्यार्थस्येतरार्थस्त्रिपद्याख्यानात् ॥ १७ ॥

नेति। ऐक्यार्थस्यैक्यमर्थो यस्य स तस्यैकमेवाद्वितीयं ब्रह्मेतिश्रुतिवाक्यस्येतरार्थो द्वैतार्थो नेत्यन्वयः। कस्मात्त्रिपद्याख्यानात्। त्रयाणामेकमेवाद्वितीयमितिपदानां समाहारस्त्रिपदी तदाख्यानात् । अन्यथा पदद्वयोपन्यासवैयर्थ्यापत्तेरिति भावः । तथा च ब्रह्मणि स्वगतसजातीयविजातीयभेदवारणायैव त्रिपद्युपन्यस्ता ॥ १७ ॥

किंच—

## प्रक्रमात् ॥ १८ ॥

प्रक्रमादिति । प्रक्रमादद्वैतार्थस्योपक्रमात्सदेव सौम्येदमग्र आसीदित्युपक्रम्याद्वैतश्रुतेरभिधानादिति भावः ॥ १८ ॥

किंच—

## भूयो व्याहारात् ॥ १९ ॥

भूय इति। भूयो व्याहारात्सर्वं खल्विदं ब्रह्म ब्रह्मैवेदं सर्वं नेह नानाऽस्ति किंचनेत्यादिभिरद्वैतार्थस्य पुनःपुनरभिधानात् । तथा चाद्वैतार्थस्यातीव दुर्गमत्वाच्छ्रुत्यर्थसंदेहे श्रुत्यन्तरसंवादस्यार्थनिर्णायकत्वाच्च भूयो व्याहार इति भावः ॥ १९ ॥

किंच—

## निरोधादिविप्रतिषेधात् ॥ २० ॥

निरोधादीति । अत्र निरोधो नाशः। आदिनोत्पत्त्यादिपरिग्रहः । तथा हि

श्रुतिः—न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः। न मुमुक्षुर्न वा मुक्त इत्येषा परमार्थतेति ॥ २० ॥

किंच—

स्मृतीतिहासैक्याच्च ॥ २१ ॥

स्मृतीति। स्मृतीतिहासैक्यात्स्मृतिर्मन्वादिरितिहासो भारतादिस्ताभ्यां यदैक्यमद्वैतार्थस्य तस्मात्। श्रुत्यर्थसंदेहे श्रुत्यन्तरस्येव स्मृतीतिहासयोरपि श्रुतिमूलकत्वेनार्थनिर्णायकत्वादिति भावः। तदैक्यं तु भूयः प्रदर्शितं विस्तरशो द्रष्टव्यं च ॥ २१ ॥

ऋतंभरप्रज्ञानां न जाड्यम् ॥ २२ ॥

इति पुरुषपाठे द्वितीयः प्रपाठः।

ऋतमिति। ऋतंभरप्रज्ञानामृतं सत्यमेव बिभर्तीति ऋतंभरा सा प्रज्ञा बुद्धिर्येषां ते तेषां जाड्यं जडत्वं बोद्धुमयोग्यत्वं नास्तीत्यर्थः। तथा च येषां सत्त्वोत्कर्षादृतंभरा प्रज्ञा जायते तेषां तत्त्वत एव शास्त्रार्थो हृद्यारोहतीति भावः ॥ २२ ॥

इति द्वितीये पुरुषपाठे द्वितीयः प्रपाठः।

---

अथ तृतीयः प्रपाठः।

---

इदानीं ब्रह्मचैतन्यस्य साक्षित्वादिरूपं वर्णयन्नाह—

देवो वाव मौलिकः साक्षी ॥ १ ॥

देव इति। दीव्यतीति देवः पुरुषः स एव मौलिकः प्रतिबिम्बद्वारेण मूलप्रकृतौ विराजमानः सन्साक्षी साक्षाद्द्रष्टा संनिकर्षं विनैव पश्यति स्वयमविकारितयाऽधिष्ठानतया च सर्वं भासयतीत्यर्थः। तथा च श्रुतिः-तत्प्रतिबिम्बितं यत्तत्साक्षिचैतन्यमासीत्। अत्र स्वच्छत्वात्प्रकृतौ पुरुषः प्रतिफलति। सलिले सूर्यवदित्यवधेयम् ॥ १ ॥

तस्यैव पुनरुपाधिभेदैर्नश्वरत्वमाह—

ईशोऽव्यक्तस्थः ॥ २ ॥

ईश इति। अव्यक्तस्थः प्रागुक्तसत्त्वप्रधानप्रकृतिस्थो देव ईशो भवतीत्यर्थः। तथा च श्रुतिः-तत्प्रतिबिम्बितं यत्तदीश्वरचैतन्यमासीदिति। स चैक एव स्वोपाधिभूततन्मायायास्तथात्वात्। ननु कथमीश्वरत्वं ब्रह्मणो घटते ब्रह्मैवेदं सर्वमित्यादिश्रुत्या ततो जगदभिन्नत्वप्रतिपादनेन तस्य प्रयोजकभावायोगाद्विति चेन्न। परमार्थतो ब्रह्मणोऽपृथगपि जगद्व्यवहारे भिन्नमेव मृदो घटवदिति

श्रुतिसिद्धान्तात् । तस्मादीश्वरजीवजगद्भावा ब्रह्मणो मायावशाद्व्यवहारवेलायामेव प्रतिभान्तीति सर्वं शिवम् ॥ २ ॥

महत्स्थो हिरण्यगर्भः ॥ ३ ॥

महत्स्थ इति । महत्स्थः प्रागुक्तरजःप्रधानप्रकृतिस्थः । तथा च श्रुतिः— तत्प्रतिबिम्बितं यत्तद्धिरण्यगर्भचैतन्यमासीदिति । तदङ्गं तु स्पष्टास्पष्टं स तदभिमानी स्पष्टास्पष्टवपुरिति श्रुतेः ॥ ३ ॥

विराडहंकारस्थः ॥ ४ ॥

विराडिति । अहंकारस्थः प्रागुक्ततमःप्रधानप्रकृतिस्थः । तथा च श्रुतिः— तत्प्रतिबिम्बितं यत्तद्विराट्चैतन्यमासीदिति । तदङ्गं तु स्पष्टं स तदभिमानी स्पष्टवपुः स्थूलपालको विष्णुः प्रधानपुरुषो भवतीति श्रुतेः । एवं तदानीं क्रमाज्ज्ञानेच्छाक्रियाभिमानिनस्त्रयो भवन्ति । तथा च श्रुतिः—पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति । बलमिच्छा । अत्रेदं बोध्यम्— त्रिविधाऽहंकृतिः प्रोक्ता सात्विकी राजसी तथा । तामसी चेति तत् त्रिभ्यः क्रमात् त्रिदेहमानिता । जीवे ज्ञानादिकं कार्यमीशे शक्तिमयं स्मृतमिति । ततश्चैकैव चिद्बिम्बप्रतिबिम्बभेदेन ब्रह्मादिनामभेदेन च पञ्चधा भवति । तथा चाऽऽहुः—ब्रह्मसाक्षीश्वरस्तावद्धिरण्यगर्भनामभृत् । विराडित्येवमाख्याता चिदेकैव हि पञ्चधेति ॥ ४ ॥

द्विधोभौ ॥ ५ ॥

द्विधेति । उभौ हिरण्यगर्भविराजौ द्विधा कार्यकारणरूपौ वर्तेते । कार्यत्वं च तयोः क्रमात् समष्टिभूतलिङ्गस्थूलदेहाभिमानाभ्यां बोध्यम् ॥ ५ ॥

तत्र हिरण्यगर्भस्य देहावयवत्रयमाह—

त्रिलिङ्गो हिरण्याख्यः ॥ ६ ॥

त्रीति । त्रिलिङ्गस्त्रीणि प्राणबाह्येन्द्रियान्तरिन्द्रियरूपाणि लिङ्गानि यस्यासौ हिरण्याख्यो हिरण्यगर्भः । त्रयाणामवान्तरभेदेन तु पञ्चप्राणदशेन्द्रियमनोबुद्धिरूपसप्तदशलिङ्गकः ॥ ६ ॥

ईश्वरस्य तटस्थलक्षणमाह—

ईडायत्तमायः सर्वज्ञः पूर्वकर्ताऽङ्कुरो
द्वयातिगत्वात् ॥ ७ ॥

ईडिति । आयत्तमायः स्वाधीनमायः सर्वज्ञः सर्वं सामान्येन विशेषेण च

जानाति पूर्वकर्ता सृष्टिस्थितिलयानामादिकर्ता। अङ्कुरो जगदुपादानं, कुतो द्वयातिगत्वात्। रजस्तमोभ्यामनभिभूतत्वात्सत्त्वोत्कर्षादिति यावत्। तथा च श्रुतिः—स स्वायत्तमायः सर्वज्ञः सृष्टिस्थितिलयानामादिकर्ता जगदङ्कुररूपो भवतीति। अत्राप्येवं विवदन्ते—सत्यकामः सत्यसंकल्प इति श्रुतेर्जीववैलक्षण्याच्च यो नित्यज्ञानेच्छाप्रयत्नशाली स एवेश्वर इति तार्किकाः। तथात्वे तदिच्छायाः सर्वकारणत्वेन सदैव सृष्टिप्रसङ्गापत्तेः कालादृष्टयोः सहकारित्वे च ताभ्यामेव सर्वोपपत्तौ तदिच्छाया हेतुत्वाभिधानानर्थक्यापत्तेस्तस्य पुनः प्रीतिप्रेमादिविरहेणोपासनाद्यप्रवृत्तेश्च शरीरसमष्ट्यभिमानी हिरण्यगर्भ एवेश्वरस्तस्योद्गीथब्राह्मणे माहात्म्यकीर्तनात्समष्टिभूतत्वेन जीववैलक्षण्याच्चेति हैरण्यगर्भाः। तस्यापि स्थूलशरीरमन्तरेण प्रतीतिविरहात्सहस्राक्षः सहस्रपादितिश्रुतेश्च स्थूलशरीराभिमानी विराडेवेति वैराजाः। तथात्वे सहस्रपादादिमत्कीटादेरपीश्वरत्वमस्तु तस्माच्चतुर्मुखब्रह्मैवेति प्राजापत्याः। तस्यापि विष्णोर्नाभिकमलजातत्वाद्विष्णुरेवेति वैष्णवाः। तस्यापि शिवैश्वर्यं परिच्छेत्तुमशक्तत्वाच्छिव एवेति शैवाः। तस्यापि पुरत्रयं साधयितुं विघ्नेशार्चनश्रवणाद्विनायक एवेति गाणपत्याः। तथात्वे भूरुण्डीतरोरपीश्वरत्वं कथं न स्यात्। किंत्वादित्योदयमन्तरेण सर्वकर्मानर्हत्वादादित्यो ब्रह्मेतिश्रुतेश्चाऽऽदित्य एवेति सौराः। यद्यप्येवमन्तर्यामिणमारभ्य स्थावरान्तेष्वीश्वरत्वमभ्युपगच्छन्तः सन्ति निम्बाश्वत्थादीनामपि कुलदेवतात्वदर्शनात्तथाऽपि तत्त्वनिश्चयकामेन न्यायागमविचारिणां तत्र प्रतिपत्तिरेकैव। तथा हि—मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्। तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगदित्यादिश्रुतेर्वासुदेवः सर्वमित्यादिस्मृतेश्च मृच्छिलाधातुदार्वादीनां सर्वेषामेवेश्वरत्वाभ्युपगमादीश्वरबुद्ध्या यस्य कस्यचिच्चिन्तनादपि फलसिद्धिः। तथा च श्रुतिः—तं यथा यथोपासते तदेव भवति। स्मृतिश्च—ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमिति। तत्र तु पूज्यपूजनाद्युत्कर्षापकर्षाभ्यां फलस्यापि तथैवेत्यवधेयम् ॥७॥

ननु सृष्टेरुत्कर्षापकर्षत्वदर्शनादीश्वरस्य वैषम्यादिदोषो दृश्यते लोकवदिति चेत्तत्राऽऽह—

## वैषम्यनैष्ठुर्ये न सापेक्षत्वात् ॥ ८ ॥

वैषम्येति। वैषम्यं भेददृष्टिर्नैष्ठुर्यं निष्ठुरता ते न स्तः। कस्मात्सापेक्षत्वात्प्राणिकर्मापेक्षत्वात्। तथा हि श्रूयते—स्वस्मिन्विलीनं सकलं जगदाविर्भावयति

म्यादिदोषो नास्तीति भावः । ननु तथाऽपि नियन्तुस्तद्दोषो दुर्वारएव प्राक्तन-कर्मस्वपि तस्यैव नियन्तृत्वादिति चेत् । उच्यते—तान्यपि तत्पूर्वार्जितादृष्टवशादेवेति कर्मादृष्टप्रवाहयोरनादित्वं सिद्धम् । एतेनेश्वरस्यापि सर्वासु प्रवृत्तिषु कर्मसु च प्रयोजकत्वमेव राजवन्न तु साक्षात्कर्तृत्वं प्रेष्यवदित्यायातम् । तथा हि श्रुतिर्भवति—एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते । एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते । स्मृतिश्च—अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वेति । तथा च प्रवृत्तिरीशस्य परकर्मवशाज्जीवस्य तु स्वपरकर्मानुगेति स्थितम्॥ ८ ॥

ईश्वरस्वरूपं निरूप्य जीवस्वरूपं निर्वक्ति—

## जीवो व्यष्टिस्थः ॥ ९ ॥

जीव इति । व्यष्टिस्थः सावधिकाश्रयस्थः परिच्छिन्नदेहाभिमानादीश्वर एव जीवसंज्ञितो भवतीत्यर्थः । तथा च पैङ्गलश्रुतिः-सर्वज्ञेशो मायालेशसमन्वितो व्यष्टिदेहं प्रविश्य तया मोहितो जीवत्वमगमच्छरीरत्रयतादात्म्यात्कर्तृत्वभोक्तृत्वमगमज्जाग्रत्स्वप्नसुषुप्तिमूर्छामरणधर्मयुक्तो घटीयन्त्रवदुद्विग्नो जातो मृत इव कुलालचक्रन्यायेन परिभ्रमतीति । एतेन जीवो मलिनसत्त्वसङ्गेन कल्पितकर्तृत्वादिमानेव प्रमातेति सूचितम् । तथा चेश्वरजीवयोः प्रतिबिम्बचैतन्यरूपेणाविशेषेऽपि शुद्धाशुद्धसत्त्वयोरुपाध्योरेव भेदाद्वैशेष्यमिति बोध्यम् ॥९॥

तस्य नामभेदानाह—

## प्राज्ञतैजसविश्वाख्यः स्वल्पवित्त्वादेः ॥ १० ॥

प्राज्ञेति । प्राज्ञादय आख्या यस्य स तथा । कुतः स्वल्पवित्त्वादेः । व्यष्टिभूतत्रिविधदेहाभिमानेन किंचिज्ज्ञत्वादेः।तथा चेश्वर एव प्राज्ञ उच्यते व्यष्टिभूतकारणदेहाभिमानेन किंचिज्ज्ञत्वात् । स च सुषुप्तिस्थानीयः स्वरूपसुखभोक्ता तदङ्गं तु अनाद्यविद्यारूपमानन्दमयम् । एवं हिरण्यगर्भ एव तैजस उच्यते व्यष्टिभूतसूक्ष्मदेहाभिमानेन तेजोमयान्तःकरणोपाधित्वात् । स च स्वप्नस्थानीयः सुखदुःखाद्यभिमानीहपरलोकगामी व्यावहारिको जीवो भवति । तदङ्गं तु प्राणमयादिकोशत्रयात्मकं पञ्चप्राणमनोबुद्धिदशेन्द्रियरूपसप्तदशलिङ्गकमपञ्चीकृतं भोगसाधनम् । ततश्च—लिङ्गदेहतत्स्थचित्प्रतिबिम्बतदधिष्ठानकूटस्थैतत्त्रितयात्मको जीवः । अयमेव प्रागयोनिजातत्वान्मानसपुत्रत्वेनाप्युपवर्णितः । तथा विराडेव विश्व उच्यते सूक्ष्मशरीराभिमानमपरित्यज्य स्थूलशरीरप्रविष्टत्वात् । स च जाग्रत्स्थानीयस्तदङ्गं तु अन्नमयं कर्मसंचितं पञ्ची-

कृतं भोगायतनम् । तथा च ब्रह्मण एव सोपाधिकस्योपाधिभेदादीश्वरत्वादिक्रमेण जीवत्वमिति निष्कर्षः । अत एवाऽऽम्नायन्ते तत्त्वमस्यहं ब्रह्मास्मीत्यादयः । तदुक्तं च—श्लोकार्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः । ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापर इति । स्वोपाधिमुक्तश्चेज्जीवो ब्रह्मैव भवतीत्यार्यसिद्धान्तः ॥ १० ॥

तस्योपाधिपारतन्त्र्यं सहेतुकमाह-

## तटस्थसात्सितापकर्षात् ॥ ११ ॥

तटेति । तटस्थसात्तटस्थ उपाधिस्तद्भिन्नत्वे सति तत्परिचायकत्वमिति तल्लक्षणात्तदायत्तः संपद्यते । कुतः सितापकर्षात्सत्त्वस्य दुर्बलत्वात् ॥ ११ ॥

## साष्टकः संसरत्याज्ञानात् ॥ १२ ॥

सेति । अष्टाभिः पुरीभिः सह वर्तते साष्टकः प्राणादिपञ्चकसूक्ष्मभूतपञ्चककर्मेन्द्रियपञ्चकज्ञानेन्द्रियपञ्चकान्तःकरणचतुष्टयाविद्याकामकर्मरूपपुर्यष्टकेन युक्तः सन्संसरति कर्ताऽहं भोक्ताऽहमित्याद्यभिमानेन व्यवहरति । आज्ञानाज्ज्ञानोदयपर्यन्तमित्यर्थः । तथा च स्मृतिः-

पुर्यष्टकेन लिङ्गेन प्राणाद्येन स युज्यते ।
तेन बद्धस्य वै बन्धो मोक्षो मुक्तस्य तेन च ॥ इति ।

एवं च सति ज्ञानोदयं विना नष्टेऽपि स्थूलशरीरे जीवो न नश्यति किंतु जीर्णं देहं विहाय देहान्तरं गृह्णाति जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इति श्रुतेर्वासांसि जीर्णानीति स्मृतेश्च । एतेनैतदप्युक्तं भवति—द्विविधं ह्यनित्यं कालादिनाश्यं ज्ञाननाश्यं च । तत्राऽऽद्यं घटादिशरीरं द्वितीयं लिङ्गशरीरमिति ॥ १२ ॥

ननु ईश्वरस्य जीवरूपत्वे जीवे कथं ज्ञानैश्वर्ययोर्न स्फुरणं तद्वदित्याह—

## संपृक्तेर्ज्ञानैश्वर्याभिभवो भस्मनेवाग्नेः ॥ १३ ॥

समिति । संपृक्तेर्देहादिभिः संश्लेषाज्ज्ञानैश्वर्याभिभवो ज्ञानैश्वर्ययोः सर्वज्ञताणिमाद्योरभिभवस्तिरोभावः कथमिव भस्मनेवाग्नेर्यथा भस्माच्छादनेन वह्नेर्दाहदीप्त्योस्तद्वदित्यर्थः ॥ १३ ॥

## भाविपर्यासश्चितश्चेतोगुणाद्वाष्पेणेवार्यम्णः ॥ १४ ॥

भेति । चितो जीवचैतन्यस्य चेतोगुणाच्चेतसः स्वोपाधिभूतस्य सत्त्वगुणतारतम्याद्भाविपर्यासः प्रकाशतारतम्यं बाष्पेणेवार्यम्णो बाष्पेण रवेरिवेत्यर्थः ॥ १४ ॥

## प्रतनु लिङ्गं स्वरूपमानाभ्याम् ॥ १५ ॥

प्रेति । लिङ्गं तदाख्यं जीवशरीरं स्वरूपमानाभ्यां स्वरूपतः परिमाणतश्च प्रतनु सूक्ष्मतरम् । अत एव तदुपाधित्वेन जीवस्याप्यणुत्वमाह श्रुतिः—बालाग्रशतभागस्य शतधाकल्पितस्य च । भागो जीवः स विज्ञेयस्तदानन्त्याय कल्पते ॥ इति । तस्य च सूक्ष्मत्वात्संचरणं स्वच्छत्वादप्रतिघातोऽप्युपपद्यते तस्माद्देहान्निर्गच्छत्पार्श्वस्थैर्नोपलभ्यते दाहादिभिः स्थूलशरीरस्योपमर्देऽपि न तदुपमृद्यते चेति ॥ १५ ॥

## अस्मिन्नेवोष्मा ॥ १६ ॥

अस्मिन्निति । अस्मिन्नेव लिङ्गशरीर एवोष्मा तापो वर्तत इति शेषः । तथा चैतस्मिञ्जीवच्छरीरे यः स्पर्शेनोष्माऽनुभूयते स लिङ्गदेहस्यैवेति बोध्यम् । अत एव श्रुतिः—उष्म एव जीविष्यञ्छीतो मरिष्यन्निति ॥ १६ ॥

## तदङ्गः प्रैति ॥ १७ ॥

तदिति । तदङ्गो लिङ्गदेहयुक्तः सञ्जीवः प्रैति लोकान्तरं गच्छतीत्यर्थः ॥ १७ ॥

## समृद्धः सत्त्वस्थः ॥ १८ ॥

समिति । सत्त्वस्थः सत्त्वप्रधानान्तःकरणस्थः समृद्धः प्रोन्नतो भवति सत्त्वरजस्तमसामूर्ध्वमध्याधोवस्थानादिति भावः * ॥ १८ ॥

जीवस्यौपाधिकभेदं दृष्टान्तेन दर्शयन्नाह—

## खवद्वैचित्र्यम् ॥ १९ ॥

खवदिति । खवद्यथैकस्यैवाऽऽकाशस्य घटमठाद्युपाधिभेदवशादनेकत्वमवभासते तद्वत्, जलभेदेन सूर्यवद्वैचित्र्यं देवतिर्यक्त्वादिना तद्धर्मभेदेन चानेकविधत्वं गौणमित्यर्थः । तथाच श्रुतिः—यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मेति । तथा चाऽऽत्मनः स्वरूपैकत्वेऽपि नानात्वमौपाधिकमिति श्रुतिविद्वत्सिद्धम् ॥ १९ ॥

---

* अत्रायमुन्नत्तिविवेकः—उन्नमनमुन्नत्तिः । स च जीवस्य परमार्थतो ब्रह्मसंनिधिरेव न तु बाह्यपरिपाटी । तथात्वे जीवस्योर्ध्वे संनिकर्षविरहात् । तथाच तमःप्रधानस्य प्राणिनः पूर्णाऽवनतिः, तमोगुणोपसर्जनेन रजसा व्याप्रियमाणस्योन्नतेरारम्भः, ततः सत्त्वोपसर्जनेन रजसा व्याप्रियमाणस्याधमोन्नतिः, ततो रजोगुणोपसर्जनेन सत्त्वेन व्याप्रियमाणस्य मध्यमोन्नतिः । ततो निस्त्रैगुण्यावस्थया विराजमानस्य पूर्णोन्नतिस्तदानीं सत्त्वप्रकर्षेणान्तःकरणस्य बहिरर्थमपहायोर्ध्वगामित्वादिति वार्तिकम् ।

न गुणैः स्वास्थ्यं वीचिमद्वत् ॥ २० ॥

नेति। गुणैः प्रकृतिसंभवैः स्वास्थ्यं स्वरूपावस्थानमात्मन इत्यन्वयः। वीचिमद्वत्तरङ्गेणाम्बुधेरिवेत्यर्थः ॥२०॥

जीवस्वरूपमनुरूपदृष्टान्तेन विशदयन्नुपसंहरति—

व्योमबिम्बाम्बूनीव त्रीणि ॥ २१ ॥

व्योमेति। त्रीणि ब्रह्मजीवतदङ्गानि। तथा च ब्रह्म व्योमवज्जीवो व्योम प्रतिबिम्बवत्तदङ्गं स्थूलसूक्ष्मकारणरूपमम्बुवदित्यर्थः। तथा हि—यथा सलिलयोगेन जृम्भमाणं व्योमप्रतिबिम्बं व्योमवद्विकारपरिच्छेदादिरहितमपि लौल्यप्रान्तादि सलिलधर्ममादधानं तज्जीवनं यावज्जीवति सलिलापगमे पुनर्व्योमरूपतामुपैति चित्प्रतिबिम्बजीवोऽपि शरीरत्रयोपयोगेन तथैवेति प्रणिधेयम्। एतेन चित्तत्प्रतिबिम्बदेहत्रयाणां स्वरूपं मिथः संपर्कश्च सततमनुसंधेयः सुधीभिरित्यपि सूचितम्। इत्थमेव जीवानां मलिनसत्त्वत्वात्तच्छुद्धये प्रेक्षावतां प्रयत्नः। तथा च यदत्र हृदि गुहायां चिदम्बरं सततमनुभूयते तदेव शनैः शनैरुपाधिमलापगमादखण्डरूपतामेतीति श्रुत्यवतंसः ॥ २१ ॥

जीवस्वरूपमभिधाय तस्य जन्मान्तरं साधयति—

अस्त्यनूकोऽभिनिवेशात् ॥ २२ ॥

अस्तीति। अनूकः पूर्वजन्मास्ति कस्मादभिनिवेशादत्राभिनिवेशो मरणादिभयं तथाहि प्राणिनां हि मा न भूवं भूयासमेवेति नित्याशिष्मतां तिरश्चामपि जातमात्राणामन्तरे मरणभीतिरुदेति। यद्धि भयं तदनिष्टहेतुरयमित्यनुभवं विना न जायते। तथा सति प्रागननुभूतमरणधर्मश्चेत्तर्हि मरणं दुःखहेतुरित्यनुभवसंस्कारविरहेण तदभ्यासजस्वरसवाहिमरणत्रासानुपपत्तिरिति जन्मान्तरसिद्धिः। न चानलादीनामुष्णतादिवत्स्वभावादेव जन्तूनां मरणभयोत्पत्तिरिति वाच्यं कार्याणां सहेतुकत्वनियमाद्भयसामान्यं प्रत्यनिष्टहेतुरयमितिज्ञानस्य कारणतादर्शनाच्च। न हि केनापि घटः सहेतुक इत्यभ्युपेत्य मृत्स्वभावाद्देशान्तरीयघटोत्पत्तिरिति कल्प्यते। नापि मरणधर्मवज्जन्मान्तरीयमन्यदपि स्मर्यतामिति वाच्यं पुण्यविशेषं विना प्राग्देहानुभूतानां मरणस्यैवातीव दुःखप्रदस्य विस्मृतिहेतुत्वात्। सुषुप्तिवत्परजन्मनि पूर्वदेहाभिमानविरहेण तद्देहानुभूतानां स्मरणानुपयोगाच्च ॥ २२ ॥

अपि च—

जातिस्मरत्वाच्च ॥ २३ ॥

जातीति । जातिस्मरत्वं पूर्वजन्मवार्तास्मरणं यच्च प्राक्तनानां भरतसप्तव्याधादीनामिवेदानींतनानामपि केषांचित्पुण्यविशेषबलेन जायते तस्मादपीत्यर्थः ॥ २३ ॥

जन्मान्तरं प्रसाध्यादृष्टं प्रमाणयति—

वैचित्र्यादपूर्वम् ॥ २४ ॥

वैचित्र्यादिति । वैचित्र्यात्प्राणिनामुत्कर्षापकर्षत्वादिना नानात्वदर्शनादपूर्वं चेतोगुणसंनिवेशविशेषात्मकसंस्कारो येन जीवानां जन्मायुर्भोगा जायन्ते तदस्तीति शेषः ।

तथा च जगत्पतिनाऽपेतवैषम्यदोषलेशेन सृज्यमानानां जन्तूनामुत्कर्षापकर्षधर्माणां सुखदुःखादिमतां च वैषम्यानुपपत्तिरित्यदृष्टसिद्धिरत एवेश्वरमनुक्रम्य श्रुतिः सकलं जगदाविर्भावयति प्राणिकर्मवशादिति ॥ २४ ॥

किंच—

सुस्वापभङ्गाच्च ॥ २५ ॥

सुस्वापेति । सुस्वापभङ्गात्प्रगाढसुषुप्तिविगमात् । तथा च साक्षात्किंचन कारणमन्तरेणाप्यकस्मात्सुस्वापभङ्गदर्शनात्कार्यस्य च सहेतुकत्वनियमादलौकिकहेतुसिद्धिरिति भावः । अत एव श्रूयते—

स एव मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम् ।
वस्त्रान्नपानादिविचित्रभोगैः स एव जाग्रत्परितृप्तिमेति ॥
स्वप्नेऽपि जीवः सुखदुःखभोक्ता स्वमायया कल्पितविश्वलोके ।
सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेति ॥
पुनश्च जन्मान्तरकर्मयोगात्स एव जीवः स्वपिति प्रबुद्धः ।
पुरत्रये क्रीडति यश्च जीवस्ततस्तु जातं सकलं विचित्रम् ॥ इति ।

सुस्वापेत्युपलक्षणं समाधिभङ्गेऽपि तथा बोध्यम् ॥ २५ ॥

बीजाङ्कुरवदविद्यावासने ॥ २६ ॥

बीजेति । अत्राविद्या देहाध्यासबीजरूपा वासना मिथ्यासंस्कारः । ते च बीजाङ्कुरवद्यथा बीजादङ्कुरः पुनरङ्कुराद्बीजमुत्पद्यते तद्वदित्यर्थः ॥ २६ ॥

संप्रति ब्रह्मजीवयोरभेदं पारमार्थिकमुपपादयति—

वाक्यादप्यैक्यमात्मनोः ॥ २७ ॥

वाक्यादिति । वाक्यादपि न केवलं बिम्बानुबिम्बरूपत्वात्तत्त्वमस्यादिवाक्यादपि । आत्मनोः परमात्मजीवात्मनोरैक्यमभेदो भेदस्तु मुखतदाभासयोरिव व्यावहारिक एवेति सर्वं निरवद्यम् ॥ २७ ॥

संप्रति महावाक्यस्यार्थान्तरपरताशङ्कां निरस्यति—

## नान्यार्थः प्राचुर्यात् ॥ २८ ॥

नेति । अन्यार्थस्तत्त्वमस्यादेरर्थान्तरं नेत्यर्थः । कुतः प्राचुर्यात् । ब्रह्मात्मैक्यबोधकवाक्यस्य बाहुल्यात् । तथा हि—तत्त्वमसि प्रज्ञानघनं ब्रह्म । अहं ब्रह्मास्मि । अयमात्मा ब्रह्म । त्वं वा अहमस्मि भगवः । अनेन जीवेनाऽऽत्मनाऽनुप्रविश्येत्यादयः । तथा च परजीवयोरैक्यस्य लोकविरुद्धस्य जन्मजन्मोपचितव्यस्तसंस्कारस्य हठेन प्रतिपादयितुमशक्यत्वात्प्राचुर्योक्तिरिति भावः ॥ २८ ॥

किंच—

## दोषात् ॥ २९ ॥

दोषादिति । दोषादहं ब्रह्मास्मीत्यादौ श्रुतार्थपरित्यागाश्रुतकल्पनादिरूपात् ॥ २९ ॥

किंच—

## विभुज्ञे तत्त्वोक्तेः ॥ ३० ॥

विभुज्ञ इति । विभुज्ञे ब्रह्मज्ञे तत्त्वोक्तेर्ब्रह्मत्वोक्तेः । तथा हि श्रुतिः—ब्रह्मविद्ब्रह्मैव भवति ब्रह्मैव सन्ब्रह्माप्येतीति ॥ ३० ॥

किंच—

## भिदवज्ञातत्वात् ॥ ३१ ॥

भिदीति । भिदि ब्रह्मजीवयोर्भेदकर्तर्यवज्ञातत्वात्तिरस्कृतत्वात् । तथा हि श्रुतिः—योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरिति ॥ ३१ ॥

किंच—

## भयश्रुतेः ॥ ३२ ॥

भयेति । भयश्रुतिश्च—यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवतीति ॥ ३२ ॥

किंच—

## शेषाच्च ॥ ३३ ॥

शेषादिति । शेषाच्छ्रुतौ सदेव सौम्येदमग्र आसीदित्युपक्रम्य तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इत्युपसंहारात् ॥ ३३ ॥

श्रुतोपपत्त्योरप्यतथ्यधीरद्वैते तर्कोपेक्षाभ्याम् ॥ ३४ ॥

इति द्वितीये पुरुषपाठे तृतीयः प्रपाठः ॥

---

श्रुतेति । श्रुतोपपत्त्योः शास्त्रयुक्त्योर्विद्यमानयोरप्यद्वैते ब्रह्मैवेदं सर्वमिति वर्त्मनि तर्कोपेक्षाभ्यां वितर्कानादराभ्यामतथ्यधीरप्रामाण्यज्ञानं गृहमेधिनामिति शेषः । तत्र च कस्यचित्तर्केण कस्यचिदुपेक्षया कस्यचिच्चोभाभ्यामिति । दुर्दैवमत्र निदानम् । इह खलु यदि जन्मिषु केचन क्वचिदद्वैततत्त्वं बुभुत्सन्ति तदा तेषां जन्मजन्मान्तरोपचिततत्प्रतिपक्षवासनाभिर्देहात्मवदनवरतद्वैतानीतधियां पूर्वं न्यायार्णवमनवगाह्याऽऽप्तवचनालोचनैव साधीयसी तदनुगततत्त्वादनुमितेरिति शिवम् ॥ ३४ ॥

इति द्वितीये पुरुषपाठे तृतीयः प्रपाठः ॥

---

अथ द्वितीये पुरुषपाठे चतुर्थः प्रपाठः ।

---

इदानीमतीन्द्रियस्य भावनासौकर्यार्थं विग्रहविकल्पनमाह—

विक्लृप्तिः प्रतीकस्य भावार्था ॥ १ ॥

विक्लृप्तिरिति । प्रतीकस्याऽऽदित्यादिरूपस्य चतुर्भुजादिरूपस्य वा विक्लृप्तिस्तत्तत्प्रकृत्यनुकूलतया विविधकल्पनम् । भावार्था भावो भावना स एवार्थः प्रयोजनमस्याः सा तथा । देहात्माभिमानिनां वक्ष्यमाणविचारजं देहात्मनोर्विवेकमन्तरेण निर्गुणभावनायामनधिकारादिति भावः । अत एवोक्तं भगवता—अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यत इति । अत्रायमाशयः—सावयवस्याविवेकिनो निरवयवभावनायामवसीदति मनो महाप्रान्तरपतितस्येव लोचनागोचरमानवतिर्यग्जनस्तम्भतरुलतादेः ॥ १ ॥

नन्वादित्याद्यालम्बनं यद्ब्रह्म विवर्तरूपं तत्किं ब्रह्मबुद्ध्या चिन्तयितव्यमुत ब्रह्माऽऽदित्यादिधियेति शङ्कमानं प्रत्याह—

तत्र हि ब्रह्मधीरुत्कर्षात् ॥ २ ॥

तत्रेति । तत्र प्रतीक आदित्याद्यवयव एव ब्रह्मधीः कार्या न तु ब्रह्मणि प्रतीकधीः । कस्मादुत्कर्षान्निकृष्टे स्वे वोत्कृष्टदृष्टेर्गौरवात् । लौकिकन्यायोऽप्येवम् । अत एवोपासनार्थं श्रुतिरप्यादित्यो ब्रह्मेत्याह न तु ब्रह्माऽऽदित्य इति ॥२॥

ननु प्रतीके कथं ब्रह्मधीर्भवितुमर्हति तस्य जडत्वादित्याह—

संभाव्योपदेशात्पञ्चाग्निवत् ॥ ३ ॥

समिति। संभाव्या प्रतीके ब्रह्मधीर्भवितुं योग्या। कस्मादुपदेशात्पञ्चाग्निवद्यथा पञ्चाग्निविद्यायां योषित्पुरुषादावग्निबुद्धिस्तद्वदित्यर्थः। तथा च प्रतीके ब्रह्मबुद्धेः कल्पनारूपत्वादुपदेशेनासौ भवितुमर्हतीति भावः ॥ ३ ॥

ननु कल्पितस्य मिथ्यात्वात्तेन कथं फलसिद्धिरित्यत आह—

भावे वाऽऽविर्देवस्य ॥ ४ ॥

भाव इति। भावो भावनाख्यवृत्तिविशेषो यश्च मानसरसत्वेनाप्यभिहितः। तत्रैव देवस्य सगुणस्य निर्गुणस्य वा ब्रह्मण आविर्विकाशो वावेत्यनेन विना भावोदयादुपास्यसिद्धिर्न भवतीत्यपि सूचितम् ॥ ४ ॥

निरुक्तेर्हेतुमाह—

तन्मूलं हि फलं लोकवत् ॥ ५ ॥

तदिति। हि यतस्तन्मूलं स एव भावो मूलं कारणं यस्य तद्भावमूलमित्यर्थः। लोकवत्, यथा लोके मिथ्याभूतादपि रज्जुसर्पादेर्भयकम्पपलायनाद्युत्पद्यते यथा वैकस्य वस्तुनो वियोगे कश्चित्क्रन्दति कश्चिदानन्दति कश्चिच्चोपेक्षते तद्वत्फलमुपासनादिजन्यमित्यर्थः।

अत एवाऽऽहुः—भावे हि भगवानास्ते न पाषाणे न मृन्मये।
न फलं भावहीनानां तस्माद्भावो हि कारणम् ॥ इति।

एतेनोपासनायां देशिकादेशमूलायां विचारापेक्षा नास्ति तदपेक्षा तु ज्ञानवर्त्मन्येवेति स्थितम्। एतदुक्तं भवति—कल्पितस्य मिथ्यात्वेऽपि तत्र सत्यस्य ब्रह्मणो भावनात्फलसिद्धिर्जायते। प्रतीकोपासनं तु न साक्षाद्ब्रह्मक्रतुस्तत्र प्रतीकप्रधानत्वेन ब्रह्मोपसर्जनत्वात्। ननु सर्वं खल्विदं ब्रह्मेत्यादिश्रुतिभिः सर्वेषामेव ब्रह्मत्वोक्तेरादित्यादौ यद्ब्रह्मचिन्तनं तत्कथं न साक्षाद्ब्रह्मोपासनमिति चेन्मैवं, तत्र ब्रह्म भावयतामप्यज्ञानां तत्स्वरूपभानविरहेण जडत्वेनैव भावनोदयात् ॥ ५ ॥

इदानीं जीवस्य व्यवहारे लिप्तत्वेऽपि तत्त्वतस्तदभावं साधयति—

नाऽऽभासोऽपि स्वतो लिप्तो निर्लेपत्वाच्चितो जलार्कवत् ॥ ६ ॥

नेति। आभासश्चित्प्रतिबिम्बरूपो यो जीवः सोऽपि स्वतः स्वरूपतो न लिप्तः। कुत इत्यपेक्षायामाह—निर्लेपत्वादिति। चितो बिम्बभूतचैतन्यस्य निर्लेपत्वात्कर्तृत्वादिसंसर्गशून्यत्वात्। तथा हि श्रूयते—प्रत्यगस्थूलोऽचक्षुरमाणोऽमना अकर्ता चैतन्यं चिन्मात्रं सदसङ्गो ह्ययं पुरुषः साक्षी चेता केवलो निर्गुणश्चेति।

तत्र दृष्टान्तो जलार्कवत् । यथा जलसूर्यः सलिलचाञ्चल्याच्चञ्चलवत्प्रतीयमानोऽपि न स्वतश्चञ्चलस्तद्वदित्यर्थः ॥ ६ ॥

उक्तमर्थं हेत्वन्तरोपन्यासेन द्रढयति—

प्रत्यक्षानुमानलिङ्गाच्च ॥ ७ ॥

प्रत्यक्षेति। प्रत्यक्षं हि श्रुतिः प्रामाण्यं प्रत्यनपेक्षत्वादनुमानं स्मृतिः श्रुत्यपेक्षत्वात्तथा च श्रुतिलिङ्गात्स्मृतिलिङ्गाच्चेत्यर्थः। तत्र श्रुतिः-किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत्। ध्यायतीव लेलायतीवेति। स्मृतिश्च भागवती—

अहंकारविमूढात्मा कर्ताऽहमिति मन्यते ।
गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥
इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ इति ।

अत एव पुराणम्—निर्गुणोऽपि परो देवो ह्यज्ञानाद्गुणवानिवेति । न च प्रकृतिर्न कर्त्री न वा धर्माधर्माद्याश्रयः परिणामित्वाज्जडत्वाद्वा मृदादिवदित्यनुमानबलादात्मन एव कर्तृत्वाद्यभ्युपेयतामिति वाच्यम्। शास्त्रविरुद्धानुमितेः प्रमाणाभासत्वस्य वक्ष्यमाणत्वात् । तथात्वे तन्मते पुरुषादेरपि परिणामित्वजडत्वप्रसङ्गाच्च । तथा हि—एष परिणामी जडो वा भवितुमर्हति गुणवत्त्वान्मृदादिवदिति ॥ ७ ॥

अत एव जीवस्य कर्तृत्वभोक्तृत्वादिव्यवहारस्याविद्यामूलकत्वमित्युपसंहरति—

वृत्तान्यध्यासात् ॥ ८ ॥

वृत्तानीति। वृत्तानि प्रमाणप्रमेयरूपाणि लौकिकानि वैदिकानि च व्यवहारजातान्यध्यासादध्यासो नाम परत्र परावभासो यश्चानादिकालमारभ्य बिलसति तस्मादुद्भवन्तीत्यर्थः । अत एवाऽऽह श्रुतिः—शरीरत्रयतादात्म्यात्कर्तृत्वभोक्तृत्वमगमत् । सत्यानृते मिथुनी करोतीति । इत्थमेवाऽऽत्मनः कर्तृत्वादेर्मायिकत्वेऽपि तत्सर्वं कुहकीवेश्वरः स्वयं जानाति प्रकृष्टसत्त्वत्वात् । जीवस्तु तत्र मुह्यति पङ्किलसत्त्वत्वादिति पर्यवसितार्थः ॥ ८ ॥

तदीक्षा वै सर्वार्था ॥ ९ ॥

तदिति । तदीक्षा प्रकृतिपुरुषयोरालोचनं सर्वार्था सर्व ऐहिक आमुष्मिकश्चार्थः प्रयोजनमस्याः सा तथा । तदवयवभूतत्वाज्जगतामिति भावः । वैरञ्च्नयोरीक्षामन्तरेण केनापि सर्वार्थसाधनं भवितुं नार्हतीत्यर्थं द्योतयति । तत्रायं निष्कर्षः—द्वावेव पदार्थौ पुरुषः सच्चिदानन्दात्मकस्तदाभासश्च । तत्र

सदाभासो जडः । स च द्विविधः प्रकृतिविकृतिभेदात् । विकृतिः पुनर्द्विविधा सदृशी विसदृशी च । तत्राऽऽद्याऽव्यक्तमहदहंकाररूपा । द्वितीया पञ्चतन्मात्राद्यखिलप्रपञ्चात्मिका । एवं चिदाभासश्चतुर्धा साक्षीश्वरहिरण्यगर्भविराड्भेदात् । तथाऽऽनन्दाभास एक एव । यदि तदाभासाः सच्चिदानन्दविरोधिनस्तर्हि क्रमादसदज्ञानासुखाख्या भवन्ति ।

अत्रानुक्ताश्च ये बाह्या ग्राह्या न्यायादिसंमताः ।
द्रव्यगुणादितद्धर्माः श्रुतीनामविरोधतः ॥
ये तु भावा जगत्यत्र सन्ति श्रुतिविरोधिनः ।
आभासा एव ते प्राज्ञैर्न ग्राह्याः परमार्थतः ॥
हित्वा चिन्तामणेर्मूढा विश्वविद्यानिधेः श्रुतेः ।
दैवीमभ्रमिकां वार्तां रमन्ते हन्त लौकिके ॥ ९ ॥

## क्लीबा ह्यत्राप्रत्ययिनः ॥ १० ॥

क्लीबा इति । अत्र प्रकृतिपुरुषवार्तायां ये क्लीबा विज्ञानविकलास्त एवाप्रत्ययिनो न विश्वासभुवो भवेयुरिति शेषः ॥ १० ॥

तत्र विचारदृष्ट्या न काऽप्यनुपपत्तिरिति दर्शयन्नाह—

## न वै विज्ञो देव्यङ्कशायी कुसृतीक्षणात्कुसृतीक्षणात् ॥ ११ ॥

## इति पुरुषपाठे चतुर्थः प्रपाठः ॥ ४ ॥

इति वैयासिके सिद्धान्तदर्शने वेदान्तविज्ञाने परापरतत्त्वनिरूपणे द्वितीयः पुरुषपाठः ॥ २ ॥

---

विज्ञो विचारकुशलो देव्यङ्कशायी महामायाक्रोडावस्थायी नेत्यन्वयः । पूर्वस्मादत्रेत्यनुवर्तनात्प्रकृतिपुरुषवार्तायामित्यर्थः । कुतः, कुसृतीक्षणादैन्द्रजालिकमायादर्शनात् । अयमाशयः—यदि कुहकिनो मायया लोके विचित्रकारित्वं स्यात्तर्हि किं ब्रह्मणो मायायास्तन्न स्यादिति मनस्वितन्नम् ॥ ११ ॥

इति पुरुषपाठे चतुर्थः प्रपाठः ॥ ४ ॥

---

इति वैश्वदेवे भाष्ये निरञ्जनाख्ये द्वितीयः पुरुषपाठः ॥ २ ॥

---

अथ तृतीयो मुक्तिपाठः ।

---

तत्र प्रथमः प्रपाठः ।

प्रकृतिपुरुषौ क्रमेणोपपाद्य जीवस्य परप्रयोजनं प्रतिपादयितुं तृतीयपाठमारभते—

मुक्तिर्हि पुमर्थः ॥ १ ॥

मुक्तिरिति । हिरत्र त्रिवर्गेभ्यो मुक्तेः परमार्थतां द्योतयति । ननु यदि मुक्तेः परमपुरुषार्थतैव नासौ कुतः पूर्ववेदे श्रूयत इति चेत् । उच्यते—वैदिके प्रवर्तमानानामादौ तन्माधुर्यावगमानर्हत्वान्न तस्मिंस्तदवतारः ॥ १ ॥

मुक्तिस्वरूपं निरूपयितुमिच्छन्नादौ बन्धं निरूपयति—

संप्रलेपो बन्धः ॥ २ ॥

समिति । संप्रलेपो देहाद्यभिमानः । तथा चाविद्यारज्ज्वा देहाद्यालाने संबन्धो बन्धः । यथा गुणमयी रज्जुः स्वभावचञ्चलं तुरगमाक्रम्य स्तम्भे बध्नाति न खल्वसौ तदानीं स्वभावेन विचरितुमर्हति तस्य तद्बन्धनेन स्वभावास्फुरणात्तद्वदविद्याऽपि त्रिगुणमयी निर्लिप्तमात्मानमाकृष्य शरीरत्रये बध्नाति तदैव देहाभिमानरूपबन्धनेन स्वरूपास्फुरणादलिप्तोऽप्यात्मा संसरति । तथा हि श्रुतिः—शरीरत्रयतादात्म्यात्कर्तृत्वभोक्तृत्वमगमत् । स्मृतिश्च—निबध्नाति महाबाहो देहे देहिनमव्ययमिति । सोऽप्याध्यासिक एवाऽऽत्मनो निर्लेपत्वादिति तत्त्वम् ॥ २ ॥

मुक्तिस्वरूपमाह—

तदत्यन्तप्रलये स्वरूपावस्थानं कैवल्यम् ॥ ३ ॥

तदिति । तदत्यन्तप्रलये तद्बन्धनस्य निवृत्तौ भूतायां पुनः कस्मिन्नप्यनुद्भवे । स्वरूपावस्थानं ब्रह्मरूपेणैकीभावः । तथा हि श्रूयते—तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते । ज्ञात्वा शिवं शान्तिमत्यन्तमेति । एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इति । सुषुप्तौ कारणदेहाभिमानान्निरोधसमाधौ च तद्बन्धननिवृत्तावपि व्युत्थाने पुनरुद्यान्न मुक्तित्वप्रसङ्गः । सा च जीवति विदेहे च जायते । तत्राऽऽद्या जीवन्मुक्तिर्द्वितीया तु विदेहमुक्तिरित्युच्यते । तथा च श्रुतिः—दुःखेनात्यन्तविमुक्तश्चरति अथ संप्रत्स्य इति । तत्र च जीवन्मुक्तौ प्रातिभासिकत्वेन द्वैतभानमस्ति विदेहमुक्तौ तु तदपि नास्तीति विशेषः । तथा च बिम्बभूतस्य ब्रह्मचैतन्यस्य न बन्धो न वा मोक्षः । बन्धमोक्षौ तु तत्प्रतिबिम्बभूतस्य जीवचैतन्यस्यैव तस्यापि तौ व्यावहारिकावेवेति निष्कर्षः ॥ ३ ॥

तदुपायं पूर्वपूर्वापेक्षयैवोज्जृम्भमाणमाह—

कर्मतदर्पणसाधनविचारसाक्षात्काराविद्यापायाना-
मुत्तरोत्तरोपजननात् ॥ ४ ॥

कर्मेति। अत्र कर्माणि स्ववर्णाश्रमोक्तानि नित्यनैमित्तिकानि। तदर्पणं तेषां कर्मणां नाहं कर्ता भृत्यवत्करोमीत्येवंबुद्ध्येश्वरे स्थापनम्। साधनं विवेकादिचतुष्टयं नित्यानित्यवस्तुविवेकेहामुत्रफलभोगविरागशमादिषट्संपन्मुमुक्षेत्येवंरूपम्। विचार आत्मतत्त्वज्ञानोपायः श्रवणमनननिदिध्यासनरूपः। साक्षात्कारो ब्रह्मात्मैक्यस्यापरोक्षभानम्। अविद्यापायो देहाद्यात्मत्वजगत्सत्यत्वज्ञानापसरः। एतेषामुत्तरोत्तरोपजननं क्रमेणाऽऽविर्भावः। तस्मात्कैवल्यमित्यन्वयः ॥ ४ ॥

तत्र प्रतिबन्धिं दर्शयति—

द्वैतसंज्ञा चेन्न ॥ ५ ॥

द्वैतेति। द्वैतसंज्ञा द्वैतस्य ब्रह्मातिरिक्तस्य संज्ञा सत्यत्वेनावधारणं चेत्तर्हि न कैवल्यमित्यर्थः ॥ ५ ॥

द्वितीयाद्धि भयम् ॥ ६ ॥

तत्र हेतुर्द्वितीयादिति। हि यस्माद्द्वितीयाद्वस्तुनो भयं संसारबन्धनं भवतीत्यर्थः। तथा च श्रुतिः—द्वितीयाद्वै भयं भवति मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीति ॥ ६ ॥

नन्वात्मनो देहे सदैव विराजमानत्वात्कुतो न स्वरूपभानमित्याह—

न तत्त्वोद्भाऽऽश्लिष्टेः ॥ ७ ॥

नेति। आश्लिष्टेरन्नमयादिकोशैर्विमिश्रणात्तत्त्वोद्भा स्वरूपाविर्भावो न भवतीत्यर्थः। तथा च प्रतिबिम्बात्मको जीवो देहसंश्लेषाद्बिम्बभूतं यत्स्वरूपचैतन्यं तन्न पश्यतीति भावः ॥ ७ ॥

संश्लेषो रसात् ॥ ८ ॥

समिति। संश्लेषो देहैरात्मसंलेपो रसाद्विषयानुरागात् ॥ ८ ॥

कुतस्तच्छैथिल्यमितिजिज्ञासायामाह—

मन्थरः सत्त्वात् ॥ ९ ॥

मन्थर इति। सत्त्वाच्छमदमसत्याहिंसाक्षमादिवृत्तिकात्। मन्थरः शिथिलः

संश्लेषो जायत इत्यर्थः । तथा च संयममूलस्य वैदिककर्मणः सर्वस्यैव तारतम्येन तत्संश्लेषशैथिल्यजननयोग्यताऽस्त्येवेति बहिर्दशागोचरः ॥ ९ ॥

शुभजन्मिनां त्रिधाधीर्भातीत्याह—

शंयुधीर्ध्यानसांख्ययोगार्था ॥ १० ॥

शमिति । शंयुधीः शुभबीजिनां बुद्धिर्ध्यानसांख्ययोगार्था ध्यानादित्रयगोचरा तत्र कस्यचिद्ध्याने कस्यचित्सांख्ये कस्यचिच्च योगे धीः प्रतिभातीत्यर्थः । अत एव भगवान्स्मरति—

ध्यानेनाऽऽत्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥ इति ।

अत्र ध्यानं तैलधारावदविच्छिन्नप्रत्ययः सांख्यमिमे सत्त्वरजस्तमांसि गुणा एते तद्व्यापारा अहमेभ्योऽन्यः साक्षिभूतो नित्य एवं चिन्तनम् । योगो भगवदर्पणबुद्ध्याऽनुष्ठीयमानघटनरूपत्वम् ॥ १० ॥

विवेकोऽर्कोऽध्यासतमसि ॥ ११ ॥

विवेक इति । विवेको देहादात्मनः पार्थक्यभानम् । अध्यासतमस्यध्यासो देहात्मभानं स एव तमस्तस्मिन्नर्को भानुरिव तदपसारकत्वादिति भावः॥११॥

संप्रति विवेकात्स्वरूपाविर्भावं दर्शयति—

तद्वतश्चैत्यनिर्भासोऽन्वयान्याभ्याम् ॥ १२ ॥

इति तृतीये मुक्तिपाठे प्रथमः प्रपाठः ॥ १ ॥

तद्वत इति । तद्वतो विवेकवतश्चैत्यनिर्भासः प्रत्यगभिन्नचित्स्वरूपविकाशः । कुतोऽन्वयान्याभ्यामन्वयव्यतिरेकाभ्याम् । तौ च क्रमादात्मदेहयोर्यथा-स्वप्ने स्थूलदेहस्याभानेऽप्यात्मनो भानमन्वयः। तत्र पुनरात्मनो भाने स्थूलदेहस्याभानं व्यतिरेकः । तल्लिङ्गं च स्वप्नोत्थितस्य स्वप्ने रथादिकमहमद्राक्षमिति स्मरणम् । एवं सुषुप्तौ लिङ्गदेहस्याभानेऽप्यात्मनो भानमन्वयः । तत्र पुनरात्मनो भाने लिङ्गस्याभानं व्यतिरेकः । तल्लिङ्गं च सुप्तोत्थितस्य सुखमहमस्वाप्सं न किंचिद्वेदिषमिति स्मरणम् । तथा समाधौ कारणदेहस्याभानेऽप्यात्मनो भानमन्वयः । तत्र पुनरात्मनो भाने कारणस्याभानं व्यतिरेकः । तल्लिङ्गं च व्युत्थितस्यैतावन्तं कालमहं समाधिमानभूवमिति स्मरणम् । तथा च जडदेहत्रितयादात्मनः पार्थक्ये सति पङ्काम्बुवत्स्वस्वरूपं प्रतिभातीति भावः ।

तथा च श्रुतिः—यथा मुञ्जादिषीकैवमात्मा युक्त्या समुद्धृतः ।
शरीरत्रितयाद्धीरैः परं ब्रह्मैव जायते ॥

एतदुक्तं भवति—साक्षात्कारात्पूर्वं देहात्मभानं प्रत्यक्षरूपं तत्पार्थक्यज्ञानं त्वनुमित्यात्मकं तैमिरिकस्य शङ्खे पीतसितत्वधीवत् ॥ १२ ॥

इति तृतीये मुक्तिपाठे प्रथमः प्रपाठः ॥ १ ॥

---

अथ तृतीये मुक्तिपाठे द्वितीयः प्रपाठः ॥ २ ॥

बन्धहेतुज्ञापनार्थं विषयभेदमाह—

**द्विधैकोऽपि क्लृप्तेः ॥ १ ॥**

द्विधेति । एकोऽप्यर्थो द्विधा भवति । कुतः क्लृप्तेर्मनःकल्पनाद्यथा घटो बहिर्मृन्मयस्तथाऽन्तरे मनोमयस्तत्राऽऽद्यः प्रमाणेनावभास्यो द्वितीयस्तु कूटस्थेनेति विशेषः । तथा च योऽत्र बहिरेक एव प्रतीयते सोऽप्यन्तरे भिद्यते यथा मांसमयी योषित्पतिपुत्रादीनामिति ॥ १ ॥

तत्र मनोमयस्य बन्धहेतुत्वमाह—

**विष्टम्भी मनोमयः ॥ २ ॥**

विष्टम्भीति । विष्टम्भी प्रतिरोधी मनोमयो मनःकल्पितो यथा स्वप्नादौ व्याघ्रादावसत्वेऽपि तस्माद्भयादिर्भाति । यथा वा सत्यपि दूरे बान्धवे मृतिं श्रुत्वा शोचति मृतेऽपि तस्मिन्नजानन्न शोचतीति ॥ २ ॥

परात्मप्राप्तौ वैराग्यस्यासाधारण्यमाह—

**मूलमतर्षः पराचः प्रतीच्यावर्तक्रमासत्त्योः ॥ ३ ॥**

मूलमिति । परा प्रातिलोम्येनाञ्चति गच्छतीति परागन्तःकरणं तस्य प्रतीचि परमात्मनि, आवर्तक्रमासत्त्योः प्रत्यावर्तनक्रमसंनिध्योर्मूलं निदानमतर्षो वैराग्यमित्यर्थः । तथा च चेतसो निसर्गतो बहिर्मुखस्य निरोधद्वारेण परात्मन्याभिमुख्ये शनैस्तत्संनिधौ चातर्षो निदानमिति भावः ॥ ३ ॥

कुतोऽसौ जायत इत्याह—

**दोषेक्षाभ्यासात् ॥ ४ ॥**

दोषेति । दोषेक्षाभ्यासाद्दोषाणां सततदर्शनात् । अत एवात्र यदि दोषदर्शनमन्तरेण कस्मिंश्चिदतर्षो दृश्यते स तदाभास एव न तु वस्तुतो वैराग्यमित्यवगन्तव्यम् ॥ ४ ॥

के ते दोषा इत्याह—

लौल्यवैरस्यजन्मजरारोगात्ययतापा दोषाः ॥ ५ ॥

लौल्येति। लौल्यं विषयाणां चाञ्चल्यं नश्वरत्वमिति यावत्। वैरस्यं शेषविरसता जन्मादितापा जन्मजरारोगात्ययेषु दुःखानि ते तथा। अत्र जन्मनि तापो गर्भवासयोनिनिःसरणाभ्यामेवं जरादिषु गलितपलितादिभिरूह्यम् । अत एवाऽऽह श्रुतिः—परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायात् । अथ भोगस्य नश्वरत्वादिदोषं पश्यत्यपि नरे न कथं दृश्यते वैराग्यमिति चेत्सत्यं न दृश्यते प्रतिबन्धकस्य भोगादृष्टस्य सद्भावात् ॥ ५ ॥

भङ्ग्यन्तरेण दोषं दर्शयन्नाह—

प्रियं रोत्स्यति स्वम् ॥ ६ ॥

प्रियमिति । अत्र प्रियं यद्धनपुत्रादिकं तत्स्वमात्मानं रोत्स्यति निबध्नीयाद्रोदयिष्यति वेत्यन्तर्भूतणिजर्थः । तथा हि श्रुतिः—स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात्प्रियं त्वां रोत्स्यतीति ॥ ६ ॥

संप्रति परमार्थसंपत्तिं दर्शयति-

शमादिर्हि संपदुत्प्लावित्वात् ॥ ७ ॥

शमादिरिति । शमादिः शमदमोपरतितितिक्षासमाधानश्रद्धेति षट्को गणः संपत्समृद्धिकरः । कुतः, उत्प्लावित्वादूर्ध्वगतिशीलत्वाद्ब्रह्मसंनिधिप्रापकत्वादिति भावः । अत्र बहिःसमृद्धिकरस्तु कनकरत्नवनितादिः संपदिवाऽऽपाततः स्फुरन्नपि परमार्थतो न संपद्विपदाकरत्वादिति हिद्योतितार्थः ॥ ७ ॥

बाह्यान्तर्विभासे शीतोष्णवत् ॥ ८ ॥

बाह्येति । बाह्यान्तर्विभासे बाह्यार्थान्तरात्मनोर्दीपनेच्छे शीतोष्णवन्मिथः प्रतिद्वन्द्विन्यौ तयोरेकस्यां बृंहितायामन्या ह्रसतीति भावः । एवं बाह्यान्तरश्रिया-वपीति बोध्यम् ॥ ८ ॥

नार्थे प्रियं ज्यायः सापेक्षत्वात् ॥ ९ ॥

नेति । अर्थे बहिर्विषये प्रियं सुखं ज्यायो नेत्यन्वयः । कस्मात्सापेक्षत्वात्सुखान्तरापेक्षत्वात् । विषयमेकं भुञ्जानस्य मनसः पुनर्विषयान्तरलिप्सया धावमानत्वादिति भावः । अत एवोक्तं-

यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ इति ॥ ९ ॥

अपि च—

लोलं च यौगिकत्वात् ॥ १० ॥

लोलमिति। लोलमनित्यं क्षणस्थायीत्यर्थः। कस्माद्यौगिकत्वाद्विषयेन्द्रियसंपर्कमात्रस्थायित्वात् ॥ १० ॥

विरसं वीर्यवन्मनः पूर्णत्वात् ॥ ११ ॥

विरसमिति। विरसं विषयतृष्णारहितं वीर्यवद्बलीयः। कुतः पूर्णत्वात्सर्वाङ्गोपेतत्वादत एवोक्तं—वैराग्यात्पूर्णतामेति मनोनाशावशानुगमिति। एतेन तृषितस्य मनसो विषयतृष्णया संकोचितत्वेनात्मतत्त्वोद्भावनानर्हत्वान्न वीर्यवत्तेति सूचितम्। अत्र विरसस्य मनसः पूर्णत्वोपन्यासात्तन्मनस एव प्राणिनस्तथात्वं नान्यस्येत्यपि सिद्धम् ॥ ११ ॥

पराक्तृष्णजो जडा वाव ॥ १२ ॥

तस्मात्परागिति। पराक्तृष्णजो बाह्यार्थानुरागिणो जडा वाव मुग्धधिय एव न तु धीरा इत्यर्थः। तथा च श्रुतिः—पराचः कामाननुयान्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम्। अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥ अत एवोक्तम्—

रागो लिङ्गमबोधस्य चित्तव्यायामभूमिषु।
कुतः शाद्वलता तस्य यस्याग्निः कोटरे तरोः ॥ इति।

यस्तु तत्त्वविदामप्यनुरागो दृश्यते स तदाभास एव तद्विषयस्य बाधितत्वात् ॥ १२ ॥

धीराणां बाह्यवैराग्ये हेतुमाह—

जाङ्गुलो ह्यर्थो विवेकिनाम् ॥ १३ ॥

जाङ्गुलेति। हि यस्मादर्थो बहिर्विषयो विवेकिनां विचारदृशां जाङ्गुलो गरलवद्भातीत्यर्थः ॥ १३ ॥

तेषामैन्द्रियकं सुखं दुःखमेवेति सहेतुकं दर्शयति—

प्राखर्यात्सुखं दुःखमेव सर्वम् ॥ १४ ॥

प्राखर्यादिति। सर्वं साम्राज्यललितललनासङ्गाद्युत्थमपि सुखं दुःखमेव विवेकिनामित्यनुवर्तते। कुतः प्राखर्यात्तीव्रत्वात्। तथा च सुखेऽपि वैषयिके रजोन्तर्मिश्रणेन किमप्येकं प्राखर्यं प्रातिकूल्येन भासमानमस्ति यन्मनस्विभिरेवानुभूयते ॥ १४ ॥

इदानीं सर्वानर्थमूलस्य कामस्य भोगेनोपरतिर्नास्तीति दर्शयति—

विना नेतरि न्यासान्नोपशाम्यति रसः स्वादैर्हविषेवानलः ॥ १५ ॥

विनेति । नेतरि

सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।
अनन्तशक्तिश्च विभोर्विधिज्ञा षडाहुरङ्गानि महेश्वरस्य ॥

इत्युक्तसर्वज्ञतादिमतीश्वरे । न्यासात्तस्यैव कर्माणि भृत्यवदहं करोमीत्येवं बुद्ध्या स्वकर्तृत्वफलार्पणाद्विना स्वादैः संभोगैः केवलै रसो विषयाभिलाषो नोपशाम्यति । तत्र दृष्टान्तो हविषेवेति । अत एवोक्तं स्मृतिपुराणादौ—

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ इति ॥ १५ ॥

नापूर्वमद्वैतादगर्वाद्वा ॥ १६ ॥

नेति । अद्वैताद्द्वितीयवस्तुरहितबोधादगर्वात्स्वकर्तृत्वरहितबोधादपूर्वमदृष्टं शुभमशुभं वा बन्धहेतु संस्काररूपं न जायत इत्यर्थः । किंतु द्वैतकर्तृत्वभानयोरविद्यैव निदानं तत्कार्यत्वात् । अगर्वादित्यद्वैतबोधासमर्थस्येति वाशब्दो द्योतयति ॥ १६ ॥

विरहार्थानुध्याऽऽकरस्तापाशंसयोः ॥ १७ ॥

विरहेति । विरहार्थानुध्या विरहोऽभावोऽमुकस्य यदस्ति मम तु तन्नास्तीत्यादिरूपोऽर्थो विषयस्तयोरनुध्या चिन्तनं तापाशंसयोर्दुःखाभिलाषयोराकर इत्यन्वयः ॥ १७ ॥

ध्रौव्येऽप्यादिष्टस्य दिष्टे मा स्मारो दुरितानाम् ॥ १८ ॥

ध्रौव्य इति । आदिष्टस्य गुरुशास्त्रोपदिष्टस्य ध्रौव्येऽपि श्रुत्वा ममैतत्कर्तव्यमेवेतिनिश्चितत्वेऽपि दिष्टे फलसाधनयोग्यसमये मा स्मारः स्मृतिर्न भवति । केषां दुरितानां पापिनां तत्स्मृतौ दुरितमेव प्रतिकूलमिति भावः । तथा च यद्यवश्यकार्यतावधारणेऽपि दिष्टे न स्मर्यते तदा तत्प्रसव्यं दुरितमनुमाय तदपनुत्तये यतितव्यम् ॥ १८ ॥

स्वरसानाप्तेरप्रतृप्यन्तो यन्त्रवत् ॥ १९ ॥

स्वेति । स्वरसानाप्तेः स्वरूपसुखानास्वादनादप्रतृप्यन्तो भोगसुखैः प्रकर्षेण तृप्तिमलभमाना जन्तवो यन्त्रवद्घटिकाकण्टकवत्परिभ्रमन्तीत्यर्थः । एतेन

भुज्यमानैरपि विषयैः परितृप्तिविरहादात्माभिलषितं सुखं न वस्तुतो भोगो-त्थमिति सूचितम् । तथा च सुखं हि द्विविधं योगजं स्वरूपं च तत्राऽऽद्यं विषयसंनिकर्षाज्जायते द्वितीयं तु स्वात्मानुभवादवभासते । अत्र यावत्स्वरूप-सुखं नाऽऽप्नुवन्ति तावज्जन्तवो घटिकाकण्टकवत्कचिदूर्ध्वं कचिच्चाधो गच्छन्तो निरन्तरं भ्रमन्तीत्यर्थः ॥ १९ ॥

देहाभिमानिनो जराजन्ममरणरोगादेरवश्यंभावान्न तापत्रयाद्विमुक्तिरिति दर्शयति—

न साङ्गस्याप्रियाद्विमोकः ॥ २० ॥

नेति । साङ्गस्य देहाभिमानिनोऽप्रियाद्दुःखत्रयात् । तथा हि श्रूयते—न ह वै शरीरस्य सतः प्रियाप्रिययोरपहतिरस्तीति ॥ २० ॥

न विविक्तं पृक्ते ॥ २१ ॥

नेति । विविक्तं देहत्रयात्पृथक्कृतमात्मानं पृक्ते स्पृशति नाप्रियमित्यर्थः । तथा हि श्रूयते—अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशत इति ॥ २१ ॥

दृगज्ञविज्ञयोः काकोलूकवत् ॥ २२ ॥

इति तृतीये मुक्तिपाठे द्वितीयः प्रपाठः ॥

दृगिति । अज्ञविज्ञयोः सच्चिदानन्दस्वरूपानभिज्ञाभिज्ञयोर्दृग्दृष्टिः काको-लूकवद्यत्र काकस्य दृष्टिर्न तत्रोलूकस्य यत्र पुनरुलूकस्य न तत्र काकस्य तद्वत् । तथा च मूढो जगदिदं पश्यति विवेकी तु तन्न पश्यति मृषात्वेनावधारणात् । एवं विवेकी स्वस्वरूपं पश्यति मूढस्तु तन्न पश्यति ज्ञानचक्षुर्विहीनत्वादिति भावः ॥ २२ ॥

इति तृतीये मुक्तिपाठे द्वितीयः प्रपाठः ॥

---

अथ तृतीये मुक्तिपाठे तृतीयः प्रपाठः ।

---

इदानीं जगतो मिथ्यात्वं सयुक्तिकं प्रतिपादयिष्यन्नादौ तस्य वासनोपक-ल्पितत्वं बोधयति—

क्लृप्तो हि सर्गस्तैमिरवत् ॥ १ ॥

क्लृप्त इति । हिः श्रुतिप्रसिद्धौ विद्वत्प्रसिद्धौ च । क्लृप्तः कल्पनया कृतः सर्गः सृष्टि-प्रपञ्चः किमिव तैमिरवन्नेत्ररोगविशेषेण दृश्यमानद्विचन्द्रादिवत् । तमिस्रेण जृम्भ-

माणभूतवेतालादिवद्वा। तथा च जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवतीतिश्रुत्युक्तमायाकृतजीवेशाभ्यां कृत्स्नं जगत्कल्पितं भवति। तत्र चेश्वर ईक्षणादिप्रवेशान्तं जीवस्तु जाग्रदादिविमोक्षान्तं कल्पयति। तथा हि श्रूयन्ते—तदैक्षत बहु स्यां प्रजायेय, अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि, एकं सन्तं बहुधा कल्पयन्तीत्यादयः। कल्पना चाऽऽविद्यिकी मानुषी च तदुक्तम्—

अतस्मिंस्तु तदाकारवृत्तिः सा कल्पनेरिता।
यद्यविद्यामृते भाति तदैषा ह्याप्यतामिका॥
या प्रातिभासिकी सृष्टिरेषाऽपि कल्पना स्मृता।
काचिदविद्यया सा च मनोमात्रेण काचन॥ इति॥ १॥

तत्प्रपञ्चस्य जन्मादिकं युक्त्या निरूपयति—

## जन्मादिमद्वैशिष्ट्यात्॥ २॥

जन्मेति। अत्र जन्मादि साध्यम्। आदिना नाशादिपरिग्रहः। कुतो वैशिष्ट्याद्विशिष्टत्वाद्गुणवत्त्वात्क्रियावत्त्वात्सत्तावत्त्वाद्वेत्यर्थः। अत्र यद्यद्गुणादिविशिष्टं तत्तज्जन्मादिमद्घटादिवद्यन्न जन्मादिमत्तद्गुणादिमन्न भवति यथा सत्तेति व्याप्तिः। तल्लक्षणं तुरीयपादादूह्यम्। नन्वाकाशं नित्यं निरवयवत्वात्सत्तावदित्यनुमानं प्रमाणमिति चेन्न शब्दादौ व्यभिचारात्। नापि विभुत्वात्तन्नित्यं परमात्मवदिति वाच्यं तस्य परममहत्त्वे मानाभावात्। तदनेकत्वे मिथःसंस्थानानर्हत्वाज्ज्यायानन्तरीक्षादित्यादिश्रुतेश्च॥ २॥

तदनुमानं प्रबलहेतूपन्यासेन द्रढयति—

## सारमितेश्च॥ ३॥

सारेति। सारमितेराप्तवाक्यात्। तथा च श्रुतिः—अतोऽन्यदार्तम्। एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणीत्यादिका। नन्वाकाशवत्सर्वगतश्च नित्य इतिश्रुत्या गगने नित्यताद्यस्त्विवति चेन्न। आकाशस्य तथात्वे सत्युपमयैव तत्प्राप्त्या तत्र सर्वगतनित्यपदयोर्वैयर्थ्यापत्तेः। तेन सर्वगतो नित्यश्चाऽऽत्माऽऽकाशवन्निरवयवो निर्लेपो वेति तदर्थः। लोकदृष्ट्या वा तदुपमाख्यानम्। तन्नित्यतादिव्यवहारस्तु सर्वव्यापि रवेर्ज्योतिस्तिष्ठन्ति पर्वताः सदेतिवज्जन्यापेक्षया व्यापित्वेन देवादीनाममरत्वोक्तिवत्प्रलयकालपर्यन्तस्थायित्वेन च बोध्यो न त्वाकाशस्य परमार्थनि-

त्यताद्यस्ति । तथात्वे वायोश्चान्तरीक्षं चैतदमृतमितिश्रुत्या वायोरप्यनश्वरत्व-प्रसङ्गात्प्रागुक्तश्रुतिजातविरोधदुर्वारत्वाच्च । अत एवाऽऽगमः—आभूतसंप्लवं स्थानममृतत्वं हि भाष्यत इति । एवं च जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इतिश्रुत्या जीवस्य यदमरत्वकीर्तनं तदपि ज्ञानोदयपर्यन्तस्था-यित्वेन समाधेयम् । तस्य नश्वरान्तःकरणदर्पणकृतप्रतिबिम्बरूपत्वात् । प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽ-स्तीतिश्रुतेश्च । तस्माज्जीवानामनादित्वेऽपि विनाशः संभवति प्रागभाववत् । क्वचित्तु तन्निरुपाधिस्वरूपाभिप्रायेण पारमार्थिकमपि तन्नित्यतादिकमभिहित-मित्यविरोधः ॥ ३ ॥

इदानीमस्य जगतो मिथ्यात्वमपि साधयति—

## मृषा चैन्द्रियकत्वाव्यतिरेकाद्यन्तवत्त्वेभ्यः ॥ ४ ॥

मृषा चेति । जगन्मृषा स्वाधिष्ठानसत्तया सत्तावत्कस्मादित्यपेक्षायां हेतुत्रयमु-पन्यस्यति—ऐन्द्रियकत्वेति । ऐन्द्रियकत्वं साक्षादिन्द्रियग्राह्यत्वम् । अत्र यद्यदै-न्द्रियकं तत्तन्मृषैव स्वाप्नप्रपञ्चशुक्तिरूप्यनभोनीलिमवितस्तिमानार्केन्दुमण्डलग-न्धर्वनगरादिवत् । यन्नैवं तन्नैवं सत्तावत्परमात्मवद्वेति व्याप्तिः । अव्यतिरेक उपादानानतिरेकः । आद्यन्तवत्त्वं जन्मविनाशशालित्वम् । अत्रापि पूर्ववदेव व्याप्तिरुन्नेया ॥ ४ ॥

ब्रह्मातिरिक्तस्य मिथ्यात्वमुपपाद्य तत्पुनर्बलवद्धेतुप्रदर्शनेन द्रढयितुमाह—

## श्रुताम्नायाच्च ॥ ५ ॥

श्रुतेति । श्रुताम्नायात्, श्रुत्युपदेशात् । तथा हि—मायां तु प्रकृतिं विद्यात् । नेह नानाऽस्ति किंचन । इन्द्रो मायाभिः पुरुरूप ईयते । एकं सन्तं बहुधा कल्प-यन्ति । वाचारम्भणं विकारो नामधेयमिति । अत एव किमिच्छन्कस्य कामा-येति श्रुतावपि जगन्मिथ्यात्वविवक्षयैव किमिच्छन्नित्युक्तिः । यदि च सुत्यप्य-नुकूले श्रुतिवचसि निरुक्तव्याप्तिग्रहे व्यभिचारशङ्का केषांचिदुत्पद्यते तर्हि तानचेतनांश्चेतयितुं कः शक्नोतीति तूष्णींभाव एव समीचीनः ॥ ५ ॥

ननु जगतो मिथ्यात्वे कथं तत्प्रतीतिर्भवतीति चेन्मृषाऽपि प्रतिभातीति लौकिकदृष्टान्तेन प्रतिपादयति—

## धान्धयैनचिति मरीचीवत् ॥ ६ ॥

धान्धयेति । धान्धया दृष्टिभ्रमेण चिति ब्रह्मणि परात्परे । एनदेतद्वियदादि-

जगत् । मरीचीवद्रविरश्मौ भासमानं यज्जलं तद्वत् । नन्विहाध्यासः प्रत्यक्ष एव विषये दृश्यते नाप्रत्यक्षे कथमसौ ब्रह्मणीति चेन्मैवं प्रत्यक्षागोचरेऽपि व्योम्नि तलनीलिमादिदर्शनात् । तस्य यत्साक्षादपरोक्षाद्ब्रह्मेतिश्रुत्या सदैव प्रत्यक्षरूपत्वाच्च । ननु तथाऽपि प्रागविद्यमानस्याऽऽरोपो न संभवति शुक्तिकादौ प्रसिद्धस्यैव रजतादेरारोपदर्शनादिति चेदुच्यते—भ्रमोत्पत्तेः प्रागपि तदस्त्येव सृष्टिप्रवाहस्यानादित्वान्मायायाः सर्वबीजमयत्वादघटनघटनपटीयस्त्वाच्चेत्युपनिषत्सिद्धान्तः । अथ यदि सांख्यतार्किकादिनये प्राणिनामहं देही स्थूलो गौरो गतिमानित्यात्मनि देहादिमत्ताभानमनादिना केनापि दोषेणाध्यसितुं शक्नोति किं तेन ब्रह्मणि जगद्बुद्धिर्भवितुं नार्हतीत्युभयोर्भिदा न राजति मनसि मनस्विनामिति ॥ ६ ॥

तन्मृषात्वमज्ञानदशायां न स्फुरतीति दर्शयन्नाह—

तथ्यमाविद्यकानां स्वपत्स्वाप्नवत् ॥ ७ ॥

तथ्यमिति । तथ्यं सत्यं भासते जगदित्यर्थः । केषामाविद्यकानामविद्यावरणावृतानां किमिव स्वपत्स्वाप्नवत् । स्वपतां तत्कालीनप्रपञ्चवत् । तथा च यथा मृषाऽपि वस्तु स्वपतां स्वप्ने तथ्यमेव प्रतिभाति तद्वदविद्यानिद्राक्रान्तानामिदं जगदिति भावः । तथा हि श्रूयते—यत्र द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदिति ।

उक्तं च—

देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः ।
लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात् ॥ इति ॥

ननु जगदलीकत्वे लोके तेन कथं भोगो निष्पद्यते । न हि मृगतृष्णोदकेन पानावगाहनादिर्भवितुमर्हति । नापि रज्जुसर्पेण दष्टो म्रियते कश्चिदिति चेदुच्यते—भोग्यसत्यत्वनिश्चय एव भोगे हेतुर्न खलु भोगो वस्तुसत्तामपेक्षते । स्वप्नादावसत्यपि विषये सुखदुःखादिजन्मदर्शनात् । मृगतृष्णादौ तु स्नानादिकाले भ्रान्तिविगमान्न तथा भवितुमर्हतीति । तथा च सति प्रातिभासिकमपि जगदधिष्ठानविज्ञानविरहेण पारमार्थिकमिव व्यवह्रियते लोकैरिति तद्व्यावहारिकमुच्यते ॥ ७ ॥

ज्ञानोदयेऽपि प्रारब्धक्षयपर्यन्तं वक्ष्यमाणसोपाधिभ्रान्तेर्न निवृत्तिरिति दर्शयति—

विदां त्वाप्रारब्धात्तिमिरिवत् ॥ ८ ॥

विदामिति। तुशब्दः पूर्ववैलक्षण्यद्योतकः। विदां कृतात्मसाक्षात्काराणाम् । आप्रारब्धाद्येन कर्मणा शरीरमुत्पद्यते तत्प्रारब्धं तद्यावत् । तिमिरिवद्यथा शङ्खादिरयं शुक्लादिमानिति विजानतामपि तिमिररोगाणामन्यथाप्रतीतिस्तद्वदिदं भातीत्यर्थः । तथा च ज्ञानिनां स्वरूपज्ञानसद्भावेऽपि व्यवहारदशायां तत्साक्षात्कारविरहाद्विक्षेपशक्तिः प्रभवति किंतु तच्छक्त्या तदानीमाभासत्वेन द्वैतभानेऽपि स्वरूपसंस्मरणान्न क्षतिः । तदित्थमध्यासवादस्य श्रुत्युपपत्तिविद्वदनुभवसिद्धस्यापि क्वचिन्निन्दाविधानं चेत्तदपि नासंगतं जगन्मिथ्यात्वोपदेशस्य ज्ञानाधिकारहीनानां प्राकृतानां प्रतिकूलत्वात् । श्वपाकादीनां सर्पिरादिवदित्यवधेयम् ॥ ८ ॥

संप्रति बहिः क्षेममाह—

संयमपथ्यसद्वृत्तिशीलान्यायुष्याण्युन्मेषित्वादर्चिषाम् ॥ ९ ॥

संयमेति। संयमः प्राणेन्द्रिययोर्विधिवन्निग्रहः । पथ्यं निदानोक्तमाहार्यम् । सद्वृत्तिः साधुजीविका। शीलं सत्स्वभावः। एतान्यायुष्याण्यायुर्हितानि । कस्मादुन्मेषित्वादुद्भासित्वात् । केषामर्चिषां तेजोविशेषरूपाणां यान्त्रिकशक्तीनाम् । तथा च देहसंधारणीनां गुणशक्तीनां यथावत्सामञ्जस्यापादकत्वादायुष्याणि संयमादीनि पूर्वपूर्वोत्कर्षक्रमेण भवन्तीति भावः । अत एवोक्तम्—

पथ्याशिनां शीलवतां नराणां सद्वृत्तिभाजां विजितेन्द्रियाणाम् ।
एवंविधानामिदमायुरत्र चिन्त्यं सदा वृद्धमुनिप्रवादः ॥

तत्रैवं योज्यताम्—यथाऽऽर्द्रचेलमुन्मीलितं कालेनाचिरेणैव शुष्येदेवमिदं वपुः प्राणेन्द्रियव्यापारेण। तदेव पुनर्निमीलितं चिरेण शुष्येदेवं संयमेन । वैधोपवासकृच्छ्राध्ययनव्रतादीनामपि तदन्तर्भावः ॥ ९ ॥

तस्मिंश्चोत्क्रान्तिर्नियतेर्दीपवत् ॥ १० ॥

तस्मिन्निति । तस्मिंश्चार्चिषि सत्यपि । उत्क्रान्तिः प्राणस्य देहत्यागः । संभवतीति शेषः । कुतो नियतेरशुभकर्मविशेषात् । दीपवद्यथा दीपस्य सत्स्वपि वर्त्याधारस्नेहेषु जीवनोपायेषु प्रचण्डवातादिना नाशस्तद्वदित्यर्थः । तदुक्तम्—

वर्त्याधारस्नेहयोगाद्यथा दीपस्य संस्थितिः ।
विक्रियाऽपि च दृष्टैवमकाले प्राणसंक्षयः ॥ इति ।

तथा च देहिनां नियतेरेवासंयमापथ्यादावपि प्रवृत्तिर्जायते । एवं च प्राणिनः प्रागुपचितधर्माधर्माभ्यामजपानां विशिष्टसंख्यामुपादायैव जायन्ते ।

तत्र संयमादिमतामूर्ध्वस्रोतोवृत्तिकानां दीर्घकालेनैव तज्जपसमाप्तिः स्यात् । अन्येषां तु लघीयसा कालेनेति न विधातरि विसंवादः ॥ १० ॥

आयुष्येषु प्राणायामस्य प्रवरत्वमाह—

प्रष्ठः प्राणयोगो विधिवद्धानविष्टम्भी ॥ ११ ॥

प्रष्ठ इति । विधिवद्यथाशास्त्रम् । प्राणयोगः प्राणस्येडापिङ्गलयोः संचरतो योगः सुषुम्नायां स्थापनम् । यच्च पूरकरेचकापेक्षया तदनपेक्षया वाऽनुष्ठेयम् । किंभूतो हानविष्टम्भी देहधारकाणां क्षयावरोधी प्रष्ठः प्रागुक्तसंयमेषूत्तमः ॥ ११ ॥

कुत इत्याह—

तद्धारो हि जीवनं मृतिस्तूत्क्रमः ॥ १२ ॥

तदिति । हि यस्मात्तद्धारस्तस्य प्राणस्य धारो धारणं देहे स्थित्यनुकूलव्यापारः । उत्क्रमो देहत्यागः । प्राणस्योत्क्रमे लिङ्गस्याप्युत्क्रमस्तदधीनत्वात्तस्य सरघाधिपस्येव सरघानाम् । तथा च श्रुतिः—प्राणस्तेजसा युक्तः सहाऽऽत्मना यथासंकल्पितं लोकं नयतीति । प्राणनकालस्तु प्राणप्रवाहभेदाद्भेदितव्यो यथा प्राणोऽधःस्रोतसा वृत्त्या प्रवहन्न चिरायते । ऊर्ध्ववृत्त्या वहमानस्तु चिरेण स्थातुमर्हतीति ॥ १२ ॥

तस्य नैसर्गिकगतिप्रकारमाह—

स्वतः सक्थिष्कुर्गतिः ॥ १३ ॥

स्वत इति । सक्थिष्कुर्नासाविवरमादाय द्वादशाङ्गुलिपरिमिता गतिः प्राणस्येत्यर्थः । अत्र स्वत इति श्रुतेर्व्यापारभेदेन तन्न्यूनाधिकत्वे च बोध्ये ॥ १३ ॥

प्राणगतेर्विस्तारमभिधाय तन्नैसर्गिकमात्रासंख्यामाह—

विघट्यां षट्कृत्वः ॥ १४ ॥

विघट्यामिति । विघट्यां पले । तथा च—विघटीं व्याप्य षट्संख्यगत्यभिधानादिवानिशं षट्शताधिकैकविंशतिसहस्रवारं प्राणो नासाभ्यां वहतीति भावः । तदुक्तं च—

> षट्शतानि दिवा रात्रौ सहस्राण्येकविंशतिम् ।
> अजपानामगायत्रीं जीवो जपति सर्वदा ॥ इति ॥ १४ ॥

सिद्धिदो ह्रासश्चेत्र्यूभ्यासाद्धठाद्वा ॥ १५ ॥

सिद्धिद इति । ह्रासः प्राणगतेर्विस्तारस्य वारसंख्यायाश्च क्षीणता । सिद्धिदः

क्षुत्पिपासानभिभवनैरुज्याणिमादिदायकः। स चेन्नयूभ्यासाद्वेदान्तोक्तश्रवणमननिदिध्यासनावर्तनात् । हठाद्धठयोगात्पतञ्जलिघेरण्डाद्युक्ताज्जायत इति शेषः। एतदुक्तं भवति—प्राणनिरोधेनाऽऽत्मनो गुह्यशक्त्युन्मीलनाद्विचित्रफलाविर्भावो भवति। वाशब्दो राजयोगानर्हस्यैव हठयोग इति बोधयति ॥१५॥

## न तद्भूस्त्रीणि पञ्चानाम् ॥ १६ ॥

नेति। पञ्चानां मूढक्षिप्तविक्षिप्तैकाग्रनिरुद्धानां चित्तावस्थाविशेषाणां मध्ये त्रीणि मूढक्षिप्तविक्षिप्तानि तद्भूः प्रागुक्तप्राणनिरोधस्थानं नेत्यन्वयः। तत्र मूढमुद्रिक्तेन तमसा द्वेषादिप्राचुर्यान्निरवधिपरपीडादिरूपविरुद्धकृत्येषु दुःखसाधनविषयेषु च नियतम्। यच्च सदैव कृत्याकृत्याविवेकिनां रक्षःपिशाचादीनां तत्प्रकृतिकानां महिषादीनां केषांचिन्मानुषाणां च । क्षिप्तमुद्रिक्तेन रजसा कामादिप्राचुर्यात्सुखदुःखसाधनेषु प्रेरितम्। यच्च सदैव दैत्यानां तत्प्रकृतिकानां चान्येषाम्। विक्षिप्तमुद्रिक्तेन सत्त्वगुणेन शान्तिप्राचुर्यात्क्लेशसाधनविरतिपूर्वकानन्दसाधनेषु शब्दस्पर्शरूपरसगन्धादिष्वेव नियतम्। यच्च सदैव देवानां तत्प्रकृतिकानां चान्येषाम् । शेषयोस्तु सात्त्विकपरिणामभेदयोरेकाग्रभूमिकायां यो योगः स संप्रज्ञातो यः पुनर्निरुद्धभूमिकायां सोऽसंप्रज्ञातः समाधिर्भवतीति बोध्यम् ॥ १६ ॥

संप्रति सर्वार्थसाधनं समाधिं निर्वक्ति—

## ध्येयैकनिर्भासः समाधिः ॥ १७ ॥

ध्येयैकनिर्भासो ध्येयैकस्य ध्यानविषयमात्रस्य निर्भासो निश्चयेन भासनमस्माद्भावनाख्यचित्तवृत्तिविशेषात्स समाधिरित्यर्थः। तथा च श्रुतिः—यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह। बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम्। तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणामिति। उक्तं च योगशास्त्रे—तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिरिति। एवं च सुषुप्तावन्तःकरणस्य ध्येयाकारवृत्तिविरहाद्वक्ष्यमाणनिदिध्यासने च ज्ञानज्ञेयज्ञातृरूपत्रिपुटीभानसद्भावात्ताभ्यामयमन्यः। स च द्विविधो बाधसमाधिर्निरोधसमाधिश्च। तत्राऽऽद्यो नेति नेत्युक्तरीत्या जायते । द्वितीयस्तु—यच्छेद्वाङ्मनसी प्राज्ञ इत्युक्तरीत्याऽऽविर्भवति। तथा च—बाधसमाधौ ज्ञानयोगिनां निरोधसमाधौ तु ध्यानयोगिनामधिकारः। तत्र चान्तःकरणस्य ध्येयाकारेणावस्थानान्न देहः सुषुप्तिवत्पतति। अयमेव जीवस्य तुरीयावस्थेत्युच्यते। मनसो ब्रह्मण्यवस्थानमात्रं तु ब्रह्मसमाधिर्गौणः स च सुकरो मुख्यसमाधिसाधको महानर्थोन्मूलकश्च बोद्धव्यः ॥ १७ ॥

कुतोऽसौ जायत इत्याकाङ्क्षायामाह—

ध्यानात् ॥ १८ ॥

ध्यानादिति। ध्यानात्प्रत्ययैकतानता ध्यानं तस्मादाविर्भवतीत्यर्थः ॥१८॥

तद्ध्यानं कुतो भवतीत्याह—

तद्धारणातः ॥ १९ ॥

तदिति । तद्ध्यानं धारणातो धारणानाम चित्तस्यैकस्मिन्नालम्बने स्थापनम् । ततो जायत इत्यर्थः ॥ १९ ॥

तत्त्रयस्य कारणमाह—

तपःस्वाध्यायेश्वरप्रणिधानजास्त्रयो योगाः ॥ २० ॥

तप इति। त्रयो धारणाध्यानसमाधयः। युज्यत एभिरिति योगाः । योगशब्दोऽयं समाधौ मुख्यो ध्यानधारणयोस्तु गौणः । तपःस्वाध्यायेश्वरप्रणिधानजास्तपःप्रभृतिभ्यो जायन्त इत्यर्थः । तत्र तपः कृच्छ्रचान्द्रायणादिभिः शरीरशोषणं तपतेः संतापार्थकत्वात्। यो नः क्लेशः स नस्तप इति स्मृतेः। तपो नानशनात्परमिति श्रुतेश्च। स्वाध्यायः प्रणवजपादिः। ईश्वरप्रणिधानं विहिताविहितानां कर्मणां सर्वेषां परमेश्वरे परमगुरौ फलानपेक्षया समर्पणम् । तदुक्तम्—

कामतोऽकामतो वाऽपि यत्करोमि शुभाशुभम् ।
तत्सर्वं त्वयि विन्यस्तं त्वत्प्रयुक्तः करोम्यहम् ॥ इति ।

अत्र भगवत्प्रणिधानं हि संसारिणः समीचीनः पन्थाः स्वकर्तृत्वाभिमानफलाभिसंधानयोः सर्वानर्थाकरत्वात्। युक्तो हि संसरञ्छाम्यतीति वक्ष्यमाणत्वात् । श्रुतिस्मृतिपुराणादिभिरेकतानेन तदभिहितत्वाच्च ॥ २० ॥

समाधेः कार्यमाह—

तत्समापत्तिरैकाग्र्यान्मणिवच्चित्तस्य ॥ २१ ॥

तदिति । चित्तस्य तत्समापत्तिर्ध्येयाकारता । ऐकाग्र्याद्ध्येयमात्रावलम्बनाद्भवतीति शेषः । किमिव मणिवत् । यथा स्फटिको वस्तुयोगेन तदाकारं धत्ते तद्वदित्यर्थः ॥ २१ ॥

समाधेर्व्यापारमाह—

व्यापृतिर्गुणसूत्कर्षः ॥ २२ ॥

व्यापृतिरिति। गुणसूत्कर्षो गुणस्य सत्त्वस्य सूत्कर्षो रजस्तमोलेशेनाप्यन-

भिभवश्वरमोत्कर्ष इति यावत् । व्यापृतिः सर्वज्ञतायाः साक्षात्कारणम् । तथा च यदा समाधिस्तदैव सूत्कर्षः सर्वज्ञता च । अत एव युक्तस्य सर्वदा सर्वार्थभानम् । युञ्जानस्य तु समाधिकालीनमिति स्थितम् ॥ २२ ॥

समाधिगोचरस्य द्वैविध्यमाह—

द्वौ वाव भाव्यौ ॥ २३ ॥

द्वाविति । द्वौ वाव द्वावेव जडाजडौ भाव्यौ भावनाविषयौ । तत्र जडः स्थूलसूक्ष्मकारणरूपः । अजडश्चैतन्यस्वरूपः ॥ २३ ॥

तस्मादुपासीतैकाग्र्यं यत्राविशेषात् ॥ २४ ॥

तस्मादिति । अविशेषाच्छ्रुतौ विशेषाश्रवणात् । यत्र दिशि देशे काले वा, ऐकाग्र्यं मनसः सौकर्येण ध्येयमात्रावलम्बनं जायते तस्मात्तस्मिन्नुपविश्योपासीतेत्यर्थः । अत एवोक्तमार्यैः—मनोनुकूल इति । तथा चोत्थितस्य मनसो देहधारणे व्यापृतत्वेन सूक्ष्मवस्तुनिरीक्षणाक्षमत्वाच्छयानस्य चाकस्मादेव निद्राविर्भावादासीनस्यैवोपासना संभवतीति बोध्यम् ॥ २४ ॥

उपासनास्वरूपमाह—

युक्तिः संततोपास्तिः ॥ २५ ॥

युक्तिरिति । युक्तिर्मनसः संबन्धः संतता तैलधारावद्विच्छेदरहिता । उपास्तिरूपासना नामेत्यर्थः । सा च द्विविधा शुद्धा मिश्रा च । तत्राऽऽद्या चतुर्भुजादिमूर्तिभावनारूपा । द्वितीया पुनर्द्विविधा कर्ममिश्रा ज्ञानमिश्रा च । तत्र कर्ममिश्रा भगवदर्पणबुद्ध्याऽनुष्ठीयमानेन कर्मणा तत्समीपवर्तनरूपा । ज्ञानमिश्रा महावाक्यार्थबोधोत्पत्तौ सोऽहमित्यनेन चिन्तनरूपा । सर्वत्र ब्रह्मभावनारूपा वा ॥ २५ ॥

ध्यानेन द्वितीयजगत्यनवतीर्णस्याज्ञतां दर्शयति—

प्राज्ञोऽप्यज्ञो यावन्न भुवोविट् ॥ २६ ॥

प्राज्ञ इति । भुवो विशतीति भुवोविट् सूक्ष्मजगत्यवतीर्णो यावन्न भवति तावत्प्राज्ञोऽपि पण्डितोऽप्यज्ञः सूक्ष्मार्थावगमानर्हत्वादिति भावः ॥ २६ ॥

समाधेः फलान्तरमाह—

स्थैर्यादणिमाद्यम् ॥ २७ ॥

स्थैर्यादिति । स्थैर्याच्चित्तैकाग्र्यादणिमाद्यमष्टैश्वर्यं प्रतिभातीत्यर्थः । अष्टैश्वर्यमाहुः—

अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा ।
ईशित्वं च वशित्वं च कामावसायिता परा ॥ इति ।

तत्राणिमाऽणुत्वं येन सूक्ष्मीभूय सर्वत्र विचरितुमर्हति । लघिमा लघुत्वं तूलावयवादप्यल्पीभावः । प्राप्तिः प्रकर्षेण व्यापनं येन चन्द्रमसमप्यङ्गुल्यग्रेण स्पृशति । प्राकाम्यमिच्छानभिघातो येन भूमावप्युदकवदुन्मज्जति निमज्जति च । महिमा महत्त्वं येन चतुर्दशभुवनान्युदरे वर्तन्ते । ईशित्वं प्रभुत्वं येन स्थावरादिसर्वभूतान्याज्ञाकारीणि भवन्ति । येन वा सृष्टिस्थितिप्रलयानामीष्टे । वशित्वं स्वातन्त्र्यं येनेन्द्रियाण्यात्मसात्कृत्वा विचरति । कामावसायिता कामान्स्वेच्छयाऽवसाययितुं शीलमस्य स तस्य भावः सत्यसंकल्पतेति यावत् ॥ २७ ॥

किंच—

दीपवदावेशः स्फुरत्यङ्गौघे योगैश्वर्यात् ॥ २८ ॥

दीपवदिति । योगैश्वर्याद्योगलभ्यप्रभावात् । स्फुरत्युत्पद्यमाने । अङ्गौघे बहुकाये । दीपवद्यथा दीपस्यैकस्यानेकवर्तिषु प्रवेशस्तद्वत् । आवेशो लिङ्गदेहस्येत्यर्थः । तथा च श्रुतिः—स एकधा भवति द्विधा भवति पञ्चधा सप्तधा नवधेति ॥ २८ ॥

समाधिफलमुपसंहरति—

निष्खे सर्वमच्छवत् ॥ २९ ॥

इति तृतीये मुक्तिपाठे तृतीयः प्रपाठः ॥

---

निष्ख इति । निष्ख इन्द्रियव्यापारशून्ये निरोधसमाधिस्थे सर्वं संनिकृष्टं विप्रकृष्टं च शुभाशुभमच्छवद्यथा दर्पणादौ मुखादिस्तद्वत्प्रतिभातीत्यर्थः । तथा चान्तःकरणं तैजसमपीन्द्रियानुगतत्वात्तत्संनिकर्षमन्तरेण ध्येयाकारितं नार्हति भवितुम् । समाधौ तु निरक्षवृत्तौ तत्पारतन्त्र्यविरहेण प्रतिबन्धकाभावाच्छक्नोति तदाकारमाधातुमित्याशयः ॥ २९ ॥

इति तृतीये मुक्तिपाठे तृतीयः प्रपाठः ।

---

अथ चतुर्थः प्रपाठः ।

---

इदानीं धर्मं सहेतुनामानं वर्णयन्नाह—

## प्रचोदितो हि धर्मः प्रतिष्ठानत्वात् ॥ १ ॥

प्रचोदित इति । प्रचोदितः शास्त्रप्रयोजितो योऽर्थः स एव प्रतिष्ठानत्वा-त्प्रतितिष्ठन्ति जगन्ति येन यत्र वा तत्प्रतिष्ठानं तस्य भावः प्रतिष्ठानत्वं तस्मा-द्धर्म उच्यते । तथा च श्रुतिः-धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पापमपनुदति धर्मेण सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्तीति । यद्यपि धर्मशब्दो देहाद्यवस्थानहेतुत्वाद्वैधे निषिद्धे च वर्तते तथाऽप्यत्र प्रचोदितपदेन निषिद्धव्युदासः ॥ १ ॥

ज्ञाननिष्ठाहेतुभूतं धर्ममाह—

## निवृत्तिश्च ॥ २ ॥

निवृत्तिरिति । निवर्तते संसारोऽनयेति निवृत्तिः । धर्म इत्यनुषज्यते । तत्र प्रवृत्त्याख्यः साक्षादभ्युदयकरो जगतः स्थितिहेतुर्ब्राह्मणादिभिराश्रमिभिरनुष्ठी-यमानो यज्ञदानादिः । निवृत्त्याख्यः साक्षान्निःश्रेयसकरः संसारात्यन्तोपरमहेतु-र्ज्ञानवैराग्यादिः । तत्राऽऽद्यं पुराऽनुतष्ठुर्मरीचिवसिष्ठादयः । द्वितीयं तु सनकसन-न्दनादयः॥ २ ॥

## देवसात्संपद्य संपाद्यः प्रयत्या कैवल्यहे-<br>तुश्चाऽऽद्यः ॥ ३ ॥

देवसादिति । देवसात्संपद्य भगवदायत्तो भूत्वा तन्नियुक्तोऽहं तदर्थमें करोमीत्येवं बुद्ध्येति यावत् । संपाद्योऽनुष्ठेयः । प्रयत्या चित्तशुद्धिद्वारेण आद्यः प्रवृत्तिधर्मः । तथा च प्रवृत्तिलक्षणो यो धर्मः स देवादिस्थानप्राप्ति हेतुरीश्वरार्पणबुद्ध्याऽनुष्ठीयमानः फलाभिसंधिवर्जितः सत्त्वशुद्धिमुखेन ज्ञानो-त्पत्तिहेतुत्वात्कैवल्यहेतुरपि भवतीति भावः ॥ ३ ॥

धर्मस्य वेदादिमूलकत्वमाह—

## श्रुतिस्मृतिसदाचारस्वप्रियाणि तन्मूलं पूर्व-<br>पूर्वाविरोधश्चेत् ॥ ४ ॥

श्रुतीति । श्रुतिर्ऋगादिः । स्मृतिर्मन्वादिः । सदाचारः साधुचरितम् । स्वप्रि स्वस्याऽऽत्मनो हृद्यम् । तन्मूलं धर्मस्य कारणम् । यदि पूर्वपूर्वाविरोधः पूर्वपू णाविरोधः परपरस्येत्यर्थः । तथा च श्रुत्यविरोधे स्मृतिः स्मृत्यविरोधे सद चारः सदाचाराविरोधे स्वप्रियं धर्ममूलमिति भावः । अत एव स्मृतिः—

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः—<br>एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य कारणम् ॥ इति ॥ ४ ॥

तस्य गतिप्रकारमाह—

गतिर्जातवेदोवत् ॥ ५ ॥

जातवेदोवदग्नेरिवोर्ध्वप्रवाहिनीत्यर्थः ॥ ५ ॥

वामाऽन्यस्य ॥ ६ ॥

वामेति । अन्यस्याधर्मस्य । वामा गतिरधःप्रवाहिनीत्यर्थः । अत एवोक्तम्—धर्मेण गमनमूर्ध्वं गमनमधस्ताद्भवत्यधर्मेणेति ॥ ६ ॥

संप्रति वर्णाश्रमधर्माणामाचारमूलकत्वमाह—

मूलमाचारश्चातुष्काणाम् ॥ ७ ॥

मूलेति । मूलमादिकारणम् । आचारः स्नानाचमनशौचादिः । चातुष्काणां चतुराश्रमधर्माणाम् । अत एव भारते—आचारप्रभवो धर्मः । स्मृतिश्च—आचारहीनं न पुनन्ति वेदा इति । एवं च वर्णाश्रमाचारबहिर्मुखे मनुजाधमे भक्तिरपि स्मरणकीर्तनादिलक्षणा न भगवत्प्रीतिकरी तथा । चोक्तम्—

वर्णाश्रमाचारवता पुरुषेण परः पुमान् ।
विष्णुराराध्यते पन्था नान्यत्तत्तोषकारणम् ॥
यः स्वकर्मपरित्यागी भक्तिमात्रेण जीवति ।
न तस्य तुष्यते विष्णुराचारात्पूज्यते यतः ॥ इति ।

भगवदनुरक्तिस्तु प्रागर्जिताचारफलम् । सा चेह सर्वानेव पवितुमर्हति निसर्गात् । तदुक्तं भगवता—

अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ इति ।

तल्लक्षणान्याह भारते—

न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ॥
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥ इति ॥ ७ ॥

धर्मस्य कृच्छ्राकृच्छ्राभ्यां फलतारतम्यमाह—

न ह वै साम्यं कृच्छ्रान्योत्थयोः ॥ ८ ॥

कृच्छ्रान्योत्थयोः कृच्छ्राकृच्छ्रजयोः साम्यं समत्वं नैवोपयुज्यते । तथात्वे च कृच्छ्रवर्त्मनि प्रवृत्त्यनुदयेन तदनुष्ठानविधिवैफल्यं स्यादिति भावः । तत्र च यदकृच्छ्रं वर्त्म तत्पुनर्मलिनचित्तार्थं विविधप्ररोचनयाऽभिहितम् । तत्रैव तदधिकारादिति द्रष्टव्यम् ॥ ८ ॥

इदानीं गृहमेधिनः शान्तिमार्गं सुलभं दर्शयति—

युक्तो हि संसरञ्छाम्यत्यनभिसंधेः ॥ ९ ॥

युक्त इति । युक्तो नाहं कर्ता किंतु भगवन्नियोगात्करोमीत्येवं समाहितः । संसरन्व्यवहरन् । शाम्यति शान्तिमेति । कुतोऽनभिसंधेः कर्ताऽहं ममेदं फलमित्यभिसंधिविरहात् । अयुक्तस्य संसरतः शान्तिर्नैवास्तीति हिद्योतितार्थः । तदुक्तं भगवता—

युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।
अयुक्तः कामकारेण फले सक्तो निबध्यते ॥ इति ॥ ९ ॥

देवाभियुक्ते तद्वाव योगक्षेमम् ॥ १० ॥

देवेति । देवाभियुक्ते भगवति सततसंयुते । तद्वाव तस्मादेव परमेश्वराद्योगक्षेममलब्धलाभो लब्धरक्षणं च प्रयत्ननिरपेक्षतयैव भवतीत्यर्थः ।

तदुक्तं तेनैव—अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ इति ॥ १० ॥

अथ शास्त्रे लोके च प्रसिद्धेऽपीश्वरे यदि कस्यचित्कथंचिद्विचिकित्सोदयः स्यात्तर्हि तदधीनकर्माचरणे तदभियोगे च प्रवृत्तिर्न स्यादिति तन्निराकरणाय पुनराह—

अस्त्यतिरेकी दिव्यानुन्यासात् ॥ ११ ॥

अस्तीति । अतिरेकी सर्वेभ्यो महानेकोऽस्ति । कस्माद्दिव्यानुन्यासात् । दिवि भवा दिव्या ग्रहनक्षत्रादयः । तेषामनुन्यासो निर्माय संनिवेशविशेषो येनैतेषामतीव बृहतामपरिसंख्येयानां व्योम्नि महान्तरान्तरे स्थितिः प्रतिनियतगतिश्च येन चैकस्मादेव मार्तण्डात्कुत्रचित्षष्टिदण्डेन कुत्रचित्संवत्सरेण कुत्रचिच्च मासेन दिवारात्र्युत्पत्तिस्तस्मादित्यर्थः । तथा च ग्रहनक्षत्रपृथिव्यादिनिर्माणपुरःसरभचक्रविन्यासाद्यलौकिकविचित्रकार्यदर्शनादतिरेकी कश्चिदस्तीतीश्वरसिद्धिः । एतदुक्तं भवति—तादृशविचित्रसर्जनस्य तथाविधकौशलोद्भावनस्य च जीवानां कथंचिदपि संभावनाया विरहाद्विचित्रशक्तिमानेकोऽस्तीत्यवश्याभ्युपेयम् ॥ ११ ॥

किंच—

हठप्रयुक्तेरन्तरक्षाणाम् ॥ १२ ॥

हठेति । अन्तरक्षाणामन्तरिन्द्रियाणां हठप्रयुक्तेरकस्मान्नियोगात् । तथा च बुद्ध्यादीनामेकत्र नियुज्यमानानामन्यत्र प्रसह्य गतिदर्शनात्तत्प्रयोक्ता कश्चि-

दस्तीत्यन्तर्यामितयेश्वरसिद्धिः । न खलु तत्प्रयोक्ता जीवो भवितुमर्हति तस्यान्तःकरणोपाधित्वेन तदधीनत्वात् । तदनिच्छयाऽप्यन्तरक्षाणां हठप्रयुक्तिदर्शनाच्च । अत एव श्रुतिः—केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः । केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति । श्रोत्रस्य श्रोत्रं मनसो मनो यत्सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् । सर्वस्य प्रभुरीशानं सर्वस्य शरणं बृहत् । एषोऽन्तर्यामीति ॥ १२ ॥

ननु तच्छक्तिमान्स्वभावः कालो वाऽस्तु किमीश्वरोरीकरणेनेति चेदाह—

## निसर्गकालयोरप्यस्वातन्त्र्यजाड्याभ्याम् ॥ १३ ॥

निसर्गेति । तथा हि—को नाम निसर्गः सोऽनिर्वचनीयो वस्तुगतः कश्चिदिति चेत्तर्हि स्वाश्रयादयमभिन्नो भिन्नो वा । नाऽऽद्यस्तथात्वे तत्कल्पनानर्थक्यप्रसङ्गात् । द्वितीयश्चेत्तस्याऽऽश्रितत्वेनाऽऽश्रयतन्त्रतावश्यंभावात् । तथा कालस्यापि सूर्यादिस्फुरणातिरिक्तत्वे मानाभावात् । तदन्यत्वेऽपि तस्य जडत्वात्कार्यस्य च कार्यं चेतनपरतन्त्रं कार्यत्वाद्घटादिवदित्यनुमानेन चेतनप्रयोज्यत्वनियमात्कश्चिदन्यो नियन्ताऽस्तीतीश्वरसिद्धिः । अत एव श्रुतिः—स्वभावमेके कवयो वदन्ति कालं तथाऽन्ये परिमुह्यमानाः । देवस्यैष महिमा तु लोके येनेदं भ्राम्यते विश्वचक्रमिति । अथ यदि नास्तिकानामभिमतः स्वभावादिरेव विचित्रकार्यकारी तर्हि तेषां ततः स्वभावादेरस्माकमीश्वरस्य च कुम्भकलशवते नाममात्रमृते वस्तुतो भेदः कश्चन किमस्तीति सुधीभिर्विवेक्तव्यम् ॥ १३ ॥

ईश्वरं निरूप्य वेदप्रामाण्यं निरूपयति—

## मानमाम्नायास्तदाम्नातत्वात् ॥ १४ ॥

मानमिति । आम्नाया वेदा मानं प्रमितिकरणं, कुतः, तदाम्नातत्वादीश्वरोच्चरितत्वात् । तथा च—ईश्वरस्य भ्रमप्रमादविप्रलिप्सादिदोषानाघ्रातत्वेन तदाम्नातस्यापि तथात्वात्प्रामाण्यम् ॥ १४ ॥

नन्वाम्नायानामीश्वराम्नातत्वे किं मानम्—यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै, इति श्रुतिरिति चेन्न । स्वप्रमितये स्वस्योपन्यासानौचित्यादित्यतः पुनराह—

## संवेद्यत्वादर्थस्य ॥ १५ ॥

सामिति । अर्थस्याऽऽम्नायप्रतिपाद्यस्य । संवेद्यत्वात्पुरुषेण सम्यगनुभवितुं शक्यत्वात् । यथा हि तत्राऽऽयुर्वेदोक्तरोगानिदानादिः इयेनन्न-

भिचरन्मजेतेत्युक्ताभिचारादिश्च । तथा च यथांऽशिनामेकांशदर्शनादप्यपरांशोऽनुभूयते तद्वदाम्नायानां सर्वांश एव प्रमाणम् । शुद्धसत्त्वेन तु सर्वांश एवावेक्षितुमद्यापि शक्यते ॥ १५ ॥

ननु तथाऽपि पङ्किलचेतसामतीन्द्रियफले विचिकित्सोदयश्चेदित्यत आह-

## शिष्टोपजुष्टदिष्टत्वाच्च ॥ १६ ॥

शिष्टेति । शिष्टोपजुष्टदिष्टत्वान्महाजनप्राक्परिगृहीतपश्चादुपदिष्टत्वात् । तथा च—वेदाः प्रमाणं मन्वादिभिः परमप्रेक्षैः परिगृहीतत्वात्परेभ्यः पुनः संदर्भादिभिरुपदिष्टत्वाच्च । न हि परप्रतारणार्थमात्मानमवसादयितुं प्रेक्षावतां प्रवृत्तिः । न वा परेषां शताब्दान्ते भाविनामवसिसादयिषा जातु वर्तते ॥ १६ ॥

तदाम्नायानामदुष्टतां साधयति—

## निरवद्या हि श्वासवन्निःसृतेः ॥ १७ ॥

निरवद्येति । निरवद्या भ्रमप्रमादादिदोषरहिताः । कुतः श्वासवन्निःसृतेः । निःश्वासवदप्रयत्ननिष्पन्नत्वात् । तथा च श्रुतिः—अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेद इति । एतेन प्रयत्नवतां रजःसंपर्केण दोषग्रस्तत्वात्तत्कृतस्य नास्त्यदोषतेति सूचितम् ॥ १७ ॥

वेदमूलत्वात्स्मृत्यादीनामपि प्रामाण्यमाह-

## स्मृतीतिहासास्तन्मूलत्वात् ॥ १८ ॥

स्मृतीति। निरवद्या इत्यर्थः। बहुवचनात्पञ्चरात्रादिपरिग्रहः। यद्यपि स्मृतीतिहासादौ प्रत्यक्षोपपत्त्योर्विसंवादोऽपि भूयानस्ति तथाऽप्यसौ न दोषाय यस्मादाचार्याणामियं शैली यां कांचित्सत्यतामुपादाय स्तुतिनिन्दार्थवादेन शान्तकारुण्यादिरसेन रूपकोत्प्रेक्षाद्यलंकारेण च वर्णयन्ति ॥ १८ ॥

इदानीमागमार्थानामितरेतरवैलक्षण्यं सकारणमाह—

## भाववैचित्र्याद्वैचित्र्यं तत्तदर्थानाम् ॥ १९ ॥

भावेति। भाववैचित्र्याद्गुणभेदेन प्रकृतेर्नानाकारत्वात् । वैचित्र्यं वैलक्षण्यम् । केषां तत्तदर्थानां प्रागुक्तवेदादिशास्त्राणां तदर्थानां च । तथा च यस्य यादृशी प्रकृतिस्तत्तदनुसारादेवाऽऽम्नातमिति भावः । अत एवोक्तम्—सत्त्वाधिके श्रुतिर्मुख्या रजोधिके स्मृतिर्वरा । पुराणं सतमोरजोदीप्ते तन्त्रं तु तामसम् । अत्रैवं समाधीयताम्—स्मृतिपुराणादौ क्वचिदुपनिषदि च सृष्ट्युत्पत्त्याधिकं

प्रकारान्तरेण रूपकाद्याख्यानेन च यदुपवर्णितं तन्मलिनसत्त्वभावानां स्वप्रकृत्यनुकूलतया सत्त्ववर्त्मनि प्रवर्तनायैव बालानुवर्तनवत् । एवं च नैसर्गिकानुभवानुवर्तनेन भपञ्जरादीनां गत्यादिवर्णनमपि संगच्छते । तथा द्वैतविशिष्टाद्वैतवादौ च कर्म्युपासकयोरेवानुकूलतयोपन्यस्तौ । अत एव तदर्थं कर्मोपासनाप्रवर्तकैर्मनीषिभिः क्वचिच्छ्रुतेरपार्थाभिधानमपि नासंगतम् ॥ १९ ॥

किंच—

## ज्ञप्तये चाद्वैतस्य ॥ २० ॥

ज्ञप्तये चेति । अद्वैतस्य त्रिविधभेदशून्यस्य ब्रह्मणो ज्ञप्तये ज्ञापनाय । तथा च साक्षात्परम्परया वाऽद्वैतब्रह्मावबोधनायैव शास्त्राणां बाहुल्यमिति भावः ॥ २० ॥

तत्प्रतिपादनप्रकारमाह—

## सोपानपादारुन्धतीक्षणवदत्र क्रमः ॥ २१ ॥

सोपानेति । अत्राद्वैतस्य ज्ञप्तौ । तथाहि—यथा प्रागधः सोपाने पादं न्यस्य शनैस्तदुपरि तदुपर्यारोहति । यथा वाऽरुन्धतीं दिदर्शयिषुः पूर्वमुदीचीं ततस्तत्स्थतारकावलीं ततो ध्रुवोपरिस्थितसप्तर्षिमण्डलं ततस्तत्र प्रागवस्थिततारकात्रयं ततस्तन्मध्यस्थं वशिष्ठाख्यं च तारकं शनैर्दर्शयित्वा तत्पार्श्वस्थामरुन्धतीं दर्शयति तद्वद्ब्रह्मणः प्रतिपादने क्रमः ॥ २१ ॥

ननु तथात्वे कथमत्र प्रेक्षावतां भिन्नमार्गानुसरणमित्याह—

## भिन्नप्रस्थानं राद्धान्ताय ॥ २२ ॥

भिन्नेति । भिन्नप्रस्थानं नास्तिकाद्यास्तिकदर्शनान्तेषु मुख्यतयैकानुवर्तनम् । राद्धान्ताय सिद्धान्ताय । परतत्त्वावधारणायेति यावत् । तथाहि—यद्यत्र स्वपक्षरक्षिणौ वादिप्रतिवादिनौ तदनुकूले च साक्ष्यलेख्ये न विद्येते तर्हि कः प्राड्विवाकः को विचारः को वा निर्णय एतेषां तदपेक्षयैव प्रवृत्तेः । तद्वच्छास्त्रार्थेऽप्यनुसरणीयम् । ततश्च मतभेदस्तद्व्युदासश्च श्रुतेरेवाभिमतः । आत्मा वै जायते पुत्रः । एष वै पुरुषोऽन्नरसमयः । इत्यादिना पुत्रान्नमयादिकोशेषु क्रमाद्गौणात्मत्वाभिधानेन सर्वशेषे प्रत्यगस्थूलोऽचक्षुरप्राणोऽमना अकर्ता चैतन्यं चिन्मात्रं सत्तत्त्वमसीत्यादिना प्रतीच्येव मुख्यात्मत्वप्रतिपादनात् । युक्तश्चायं भिन्नमतार्थानां विचारमन्तरेण तत्त्वस्फुरणायोगाद्विना च तन्निरसनं परतत्त्वस्य महिमानवगमादिति मनस्विनां हृद्यम् । एवं ध्वजनिखनतन्यायेन तत्त्वबुद्धेर्दृढतामुत्पादयितुमपि शास्त्रे नास्तिक्यतन्निरसनाद्यवतारः ॥ २२ ॥

तर्केण मथनात्प्रादुरुभयोर्निधिवत् ॥ २३ ॥

तर्केणेति । तर्केण न्यायेन प्रतिज्ञाहेतूदाहरणोपन्यासात्मकेन मथनाच्छास्त्रार्थानामालोडनादुभयोः सदसत्फलयोः प्रादुर्विकासः । निधिवन्निधीयन्ते रत्नान्यस्मिन्निति निधिः समुद्रस्तद्वत् । तथा च यथा समुद्रमन्थनाद्देवानाममृतं दैत्यानां हलाहलं तद्वच्छ्रुत्यनुकूलेन तर्केण सुफलं व्यस्तेन व्यस्तमिति भावः ॥ २३ ॥

त्रिवेण्या वावैकाध्वगास्त्रिसरित्सङ्गादिव पौताः ॥ २४ ॥

त्रीति । त्रिवेण्या वाव, इडापिङ्गलासुषुम्नामेलनस्थानादेव । एकाध्वगा भिन्नवर्त्मनि न विचरन्तीत्यर्थः । त्रिसरित्सङ्गादिव गङ्गायमुनासरस्वतीसङ्गमादिव । पौता नाविकाः । तथा हि—यथा पौतास्त्रिसरित्सु तरणीः परिचालयन्तस्तासामितरेतरभेदं पश्यन्ति । तत्सङ्गमगतास्तु तिसृणामैक्यमेव तथा यावज्जन्तवस्त्रिगुणाधिकारेष्विडापिङ्गलासुषुम्नामार्गेषु संचरन्ति तावत्तेषां परस्परभेदादेव द्वैतजगत्यवतिष्ठन्ते । भ्रूमध्ये यत्त्रिवेणीस्थानं तदुत्तीर्णास्तु द्वैतं न पश्यन्तीति भावः । एतदुक्तं भवति—यदा पुंसां श्रवणमननिदिध्यासनरतानामद्वैतभावाविर्भावस्तदाऽन्तःकरणं प्राणैः सह भ्रुवोरूर्ध्वं विराजति । द्वैतभावे पुनरिन्द्रियपरतन्त्रतामाप्नुवत्तदधो विराजतीति ॥ २४ ॥

जिह्वोपस्थयमो द्वारं स्वर्गापवर्गाम्नायाधिगमानाम् ॥ २५ ॥

जिह्वेति । जिह्वोपस्थयमो रसनाशिश्नेन्द्रिययोः संयमः स्वर्गापवर्गाम्नायाधिगमानां द्वारं मार्गः । तत्र स्वर्गो दुःखानवच्छेदकीभूतशरीरावच्छिन्नसुखम् । अपवर्गः कैवल्यम् । आम्नायाधिगमो वेदतात्पर्यावबोधः ॥ २५ ॥

द्विविधविद्याया एव वेद्यत्वमाह—

द्वे विद्ये वेद्ये परापरे ॥ २६ ॥

द्वे इति । तत्र परा परब्रह्मलक्षणा । अपरा, ऋगादिलक्षणा । तत्र च शब्दब्रह्मपूर्विका हि परब्रह्मावगतिः । तथा हि श्रुतिः—नावेदविन्मनुते तं बृहन्तम् । शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छतीति । अत्र विदुषो विद्यया जीवतः परयशो घ्नतो वा सांपरायिकफलं नास्ति । तथा च विष्णुः—यश्च विद्यामासाद्य तया जीवेन्न च सा तस्य परलोकफलप्रदा भवति यश्च विद्यया परेषां यशो हन्तीति ॥ २६ ॥

बाह्यात्मविज्ञाने मिश्रैकसत्त्वयोः ॥ २७ ॥

बाह्येति । मिश्रैकसत्त्वयोर्मिश्रसत्त्वशुद्धसत्त्वयोः । तथा हि—द्विविधं हि विज्ञानं बाह्यात्मभेदात् । तत्राऽऽद्ये रजःसंमिश्रसत्त्वधर्माणां द्वितीये तु शुद्धचित्तानामधिकार इति भावः । मिश्रैकसत्त्वधर्मानाहुः—स्वात्मानुभूतितद्भेदबोधपरमशान्तयः । विशुद्धसत्त्वजा भक्तिश्रद्धाद्या मिश्रसत्त्वजा इति ॥ २७ ॥

कर्षणी मणिवच्चिरानुध्यायाः ॥ २८ ॥

कर्षणीति । चिरानुध्याया दीर्घकालीनभावनायाः । कर्षणी कृष्यतेऽनयेति वस्तुप्रापिका शक्तिराविर्भवतीति शेषः । मणिवद्यथा चिन्तामणेः शक्तिरभीष्टार्थप्रदायिनी । यद्वाऽयस्कान्तस्य लोहाकर्षणी तद्वदित्यर्थः ॥ २८ ॥

सा कुत्र प्रतिभातीत्यत्राऽऽह—

दृश्यते ध्यायिन्यनिर्विण्णे ॥ २९ ॥

दृश्यत इति । ध्यायिनि ध्यानशीले । अनिर्विण्णे कदा सिद्धिर्भविष्यतीत्युत्कण्ठाशून्ये । एतेन टिट्टिभोपाख्यानं स्मारितम् । तदुपाख्यानं च कस्मिंश्चित्सिन्धुकूले केचन पक्षिणः कुलायं निर्माय तस्मिन्नण्डानि जनयामासुः । कदाचित्कूलभङ्गेन समुद्रस्तानि स्वसलिले निमज्जयामास । ततस्ते विहंगमाः स्वडिम्भानम्बुनि मग्नानवेक्ष्य समुद्रमिमं शोषयाम इति दृढाध्यवसायाश्चञ्चुभ्यां तत्तोयं तटे सिषिचुः । ततः परेषां तदवलोकमानानामुपहासं देवादीनामप्यसाध्ये सिषाधयिषा युष्माकं क्षीणवपुषां प्रमत्ततैवेति जुगुप्सनं च न क्षणमप्याकर्णयांचक्रुः । अथ तत्र दैवादागतो मुनिर्नारदः पक्षिणस्तानपृच्छत्किमिदमिति । पक्षिणः प्रत्यूचुः-सिञ्चामः सिन्धुमिममस्माकं डिम्भानपहृतवन्तमिति । मुनिः सहास्यः पुनरुवाच—काले कियति सिध्येतेति । ते पुनः प्रत्यूचुः—इह जन्मनि जन्मान्तरे वेति । ततस्तेषां तदध्यवसायं संस्मरन्मुनिर्गरुडमुपेत्य सर्वं कथयामास । वैनतेयश्च स्वज्ञातीनां दुःखं परिजिहीर्षुः सिन्धुकूलमेत्य तथैव ददर्श । अथ विहंगमांस्तानाश्वसञ्ज्ञम्पयित्वा सागरे निपत्य पक्षद्वयास्फालनेन तत्सलिलान्युत्तोलयामास । समुद्रश्च भयात्तदानीमेव तेभ्यस्तदण्डान्यर्पयामासेति लोके प्रचरति ॥ २९ ॥

जननी च तिरश्चि क्व च ॥ ३० ॥

जननीति । क्व च कस्मिंश्चित् । तिरश्चि तैलपादौ भ्रमरध्यायिनि । जननी जायतेऽनयेत्यसदुत्पादिका शक्तिश्चिरानुध्याया दृश्यत इत्यर्थः ॥ ३० ॥

तत्त्वे वितर्कोन्मेषः कल्मषात् ॥ ३१ ॥

तत्त्वेति । तत्त्वे वस्तुस्वरूपे । वितर्कोन्मेषो विरुद्धतर्काविर्भावः । कुतः कल्मषात्तत्त्वबोधप्रतिबन्धकदुरितात् ॥ ३१ ॥

बीजमृद्ध्यनृद्ध्योरन्यस्माद्धठाद्वा जातु क्वापि फलोत्प्रवणम् ॥ ३२ ॥

बीजमिति । अन्यस्मात्पुरुषात्तदुपदेशादिना हठादकस्माद्वा, ऋद्ध्यनृध्यो-रुन्नत्यवनत्योः, लौकिकालौकिकयोः । बीजं सामर्थ्यं जातु समयविशेषे । क्वापि पुरुषविशेषे । फलोत्प्रवणं फलप्रत्यभिमुखम् । भवतीत्यर्थः ॥ ३२ ॥

विस्फुरच्चेदबाध्यम् ॥ ३३ ॥

विस्फुरदिति । तद्बीजं विस्फुरद्विशेषेण जृम्भमाणं चेदबाध्यं केनापि बाधितुं न शक्यम् । तदानीमृद्धिबीजिनस्तत्प्रतिकूलमनृद्धिबीजिनश्च ऋद्ध्यनुकूलमर्थं न गृह्णन्तीति भावः ॥ ३३ ॥

सिद्ध्यध्वनायि ॥ ३४ ॥

सिद्धीति । सिद्ध्यध्वनायि सिद्धेः फलनिष्पत्तेः । अध्वानमुपायम् । नेतुं प्रापयितुं शीलमस्येति तदित्यर्थः । तथा च—स्फुरद्बीजं निसर्गादेव सिद्धेरध्वानं प्रापयतीति भावः ।

हेत्वभिसंधिर्द्वारं धीवैशद्यसिध्योः ॥ ३५ ॥

हेत्विति । हेत्वभिसंधिः कार्यस्य कारणानुसंधानं धीवैशद्यसिद्ध्योर्बुद्धिनैर्मल्यफलनिष्पत्त्योः । द्वारमुपाय इत्यर्थः ॥ ३५ ॥

नाप्युपेक्ष्यमुपेक्ष्यं चेत्तत्त्वैषणा ॥ ३६ ॥

नेति । यदि पुंसां तत्त्वबुभुत्सा वर्तते तर्हि जगति यदुपेक्ष्यं तदपि नोपेक्ष्यं प्रतिवस्तुन्येव तत्त्वोद्भावकसामग्रीसत्त्वादिति भावः ॥ ३६ ॥

वस्तुतत्त्वाधिगमे हेतुमाह—

तत्त्वाभिव्यक्तिर्हेत्वधिगमवितर्कापायाभ्याम् ॥ ३७ ॥

तत्त्वेति । तत्त्वाभिव्यक्तिर्वस्तुस्वरूपाविर्भावः । हेत्वधिगमवितर्कापायाभ्यां हेत्वधिगमो हेतुः कारणमुपादानाख्यं निमित्ताख्यं च तस्याधिगमः स्वाधीनतया भानं वितर्कापायः संशयापगमस्ताभ्यामित्यर्थः । वितर्कापाय इत्यनेन संदेहानुदये तत्त्वाभिव्यक्तिर्न स्यादित्यपि सूचितम् ॥ ३७ ॥

तन्नीर्धीः क्रमोत्प्लवा ॥ ३८ ॥

तदिति । क्रमोत्प्लवा क्रमोर्ध्वगामिनी । धीरन्तःकरणम् । तन्नीस्तत्त्वप्रापिका । तथा च—बुद्धेः क्रमोत्प्लवतादर्शनं चेत्तर्हि तत्त्वसंनिकर्षोऽनुमीयताम् ॥ ३८ ॥

युञ्जानः क्रौञ्चवद्ध्याताऽर्थात् ॥ ३९ ॥

युञ्जान इति । क्रौञ्चवद्ध्याता क्रौञ्च इव ध्येयनिपुणः । अर्थात्फलतः । युञ्जानो योगी भवति । तदानीं बाह्येन्द्रियव्यापारविगमादिति भावः॥ ३९ ॥

येषां यत्र यत्र तीव्रानुरतिर्दृश्यते काले तत्सिद्धिरवश्यं भवतीति दर्शयन्नाह—

रतिरेकान्ताऽर्थे मणिवत् ॥ ४० ॥

रतिरिति । एकान्ता प्रगाढा । अर्थे स्वविषये । मणिवद्यथाऽयस्कान्तो मणिरय आकर्षति तथा नितान्तानुरतिरपि स्वविषयमाकर्षति । तथा च तीव्रानुरक्तस्य स्वतः परतो वा तत्सिद्धिरवश्यं भवतीति भावः । एतेन क्षुद्रचञ्चूपाख्यानमपि सूचितम् ।

तदुपाख्यानं च कश्चिदेकः क्षुद्रचञ्चुर्विहंगमः कस्मिंश्चित्तरौ नीडं निर्माय तस्मिन्नण्डान्यजीजनत् । दैवात्तत्र यदृच्छया विचरन्नेकः कुञ्जरो गात्रघर्षणेन तरुणा सह तानि भूमौ पातयामास । अथासौ विहंगो भग्नान्यण्डानि निरीक्ष्य शोकसंतप्तमना बहुधा विलपन्निमं दुरात्मानं दन्तिनमहं व्यापादयिष्यामीति बाढं संकल्प्य पुनर्वितर्कितवान् । बृहत्तनुरयमहं तु क्षीणवपुस्तत्कथमेनं निपातयिष्यामीति । ततस्तदुपायं स्वयमनीक्षमाणः स्वबन्धुं भृङ्गमुपेत्य यथासंकल्पितं विज्ञापयामास । भृङ्गश्च व्याजहार—बन्धो भवतोऽपि क्षुद्रवपुरहं भगवता कृतः । तत्कथं दुर्व्यापारमिमं साधयितुं शक्नोमीति भवाञ्शोकं परिहाय गृहं प्रत्यागत्य पुनस्तनयानुत्पादयतु । तदाकर्ण्य क्षीणचञ्चुरवसीदन्नुवाच—मित्र यदि स्यामहं प्रभ्रष्टसंकल्पस्तर्हि नूनमिदं वपुः पातयिष्यामीत्युक्तो द्विरेफोऽपि तन्मार्गमसमीक्ष्य चञ्चुमता सार्धं विलपंस्तद्बन्धुं भेकराजमुपतस्थौ । ततो मण्डूकः सह संभ्रमेण किमर्थमागतोऽसीति कृतप्रश्नोत्तरं बन्धुवदनविनिर्गतं तद्बन्धूदन्तमाकर्ण्य कोपेन कम्पितवपुरारक्तलोचनः स्फुरिताधरः प्रोवाच—

रेरे दुरात्मन्वनजातजन्तो निहत्य पुत्रान्मम बन्धुबन्धोः ।
अहो तदद्यापि वसुंधरायां स्थिते शरीरे मयि जीवसि त्वम् ॥

अलं विलम्बेन समीक्षयैनं सखे स यत्रास्ति तदेत्य तूर्णम् ।
तन्मौलिमुत्प्लुत्य पदेन कुम्भं चूर्णं विचूर्णं च करोमि सद्यः ॥

इत्थमेव वीररसप्लुतदर्दुरस्तयोरग्रमासाद्य गजाभिमुखो लम्फेन लम्फेन चाव्राजीत् । ततः कियद्दूरं गच्छन्नवदत्—बन्धो मज्ञयाऽनुरागेण च किमत्र न सिध्यति । किं बहुना,—त्वत्प्रभावेणेन्दुमपि करे विधातुं शक्नोमीति तुच्छं करिव्यापादनम् । इदानीं किल तत्कौशलमिदमभिधीयते—सखे मधुव्रत तव बन्धुना पूर्वमुड्डीयोड्डीय चञ्चुभ्यां करिणो नेत्रगोले गालयितव्ये । भवता च तत्कर्णमुपेत्य निरन्तरं गुञ्जितव्यम् । तदुत्तरं यत्तन्ममैव तन्त्रम् । ततस्तदादेशमुपजीवता चञ्चुमता कृतचञ्चुघातेनान्धीभूतं गुञ्जनवता च भ्रमरेण मदकलं मातङ्गं काननानि बम्भ्रमित्वा तृषितं तमवलोक्य चातुर्यचिन्तामणिर्मण्डूकराजस्तदग्रतः सशब्दो धावितवान् । वारणश्च तन्निनादेन जलाशयमनुमाय तमनुससार । ततः कियद्दूरमेत्य भेकः पङ्कावशेषं शुष्कमेकं सरः समासाद्य तदुपरि तिष्ठन्नुच्चै रुराव । ततश्चङ्क्रमणेन तृष्णया च कण्ठागतप्राणो द्विरदः स्निग्धां मृदमालभमानः सलिलाशयं निश्चित्य भेकाभिमुखस्तीव्रजवेन गच्छन्महापङ्के निमग्नः पञ्चत्वं गतश्च । भेकश्च सपदि तन्मौलिमुत्प्लुत्य पुनः पुनः पदाघातं कुर्वन्नगर्ज । ततस्ते सिद्धमनोरथाः प्रीणन्तः प्रियभाषणेन परस्परमाश्लिष्य स्वस्वस्थानं प्रतस्थिर इति । अत्र प्रावृषि तृणाङ्कुरन्यायेन यस्य यत्रैकान्तरतिर्दृश्यते तस्य तत्कार्यसिद्धिबीजमस्तीत्यनुमेयम् ॥ ४० ॥

## व्रतायत्तिर्ज्यायसी क्रमर्द्धेरवदातस्य ॥ ४१ ॥

व्रतेति । व्रतं शास्त्रविहितस्तदविरोधी वा यः कश्चिन्नियमः । तस्याऽऽयत्तिरनुगामित्वमाग्रहो वा । ज्यायसी महती । कुतः क्रमर्द्धेः क्रमोपबृंहणत्वात् । कस्यावदातस्य । अवदायति विमली भवति जीवोऽनेनेति अवदातः सत्त्वगुणस्तस्येत्यर्थः । तथा च व्रतायत्तेः शुभशक्त्युन्मेषित्वात्तत्र यतितव्यम् ॥४१॥

तत्र ब्रह्मचर्यस्य प्राधान्यमाह—

## ब्रह्मचर्यमुदग्रमुद्वृत्तित्वात् ॥ ४२ ॥

ब्रह्मेति । ब्रह्मचर्यमामिषादिवर्जनसहिताष्टाङ्गमैथुनवर्जनम् । उदग्रं व्रतेषु प्रधानम् । कुत उद्वृत्तित्वात्प्रतिलोमपरिणामरूपत्वात् । तस्य च बहुलानर्थनिवर्तकत्वादायुराद्युपबृंहणत्वाद्ब्रह्मतत्त्वोद्भावकत्वाच्चेति द्रष्टव्यम् । अत एव श्रुतिः—यं ब्रह्मचर्येणानुविन्दते । गृहमेधिनां तु स्वभार्यायामृतावपर्वणि रेतःसेकेऽपि न ब्रह्मचर्यच्यवनम् । सुतोत्पत्त्यनन्तरं सर्वथा योषिद्वर्जनं तु महाव्रतमिति ॥ ४२ ॥

न व्यवायहिंसाऽऽमिषसुराग्रहादौ चोदनाभिरुच्याऽऽप्तेः ॥ ४३ ॥

नेति । व्यवायादौ चोदना शास्त्रप्रेरणा नास्तीत्यर्थः । व्यवायो मैथुनम् । कुतोऽभिरुच्याऽऽप्ते रागतः प्राप्तेः । तदुक्तम्—

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥

अयं हि कारिकार्थः—शास्त्रतो रागतो न्यायतश्चाप्राप्तौ विधिरपूर्वविधिः । यथा स्वर्गकामो यजेतेति स्वर्गार्थयागस्य प्रमाणान्तरेणाप्राप्तस्यानेन विधानात् । रागतः पक्षे प्राप्तस्य रागाभावे पुनरप्राप्तस्य प्रापको विधिर्नियमः । यथा व्रीहीनवहन्तीति वैतुष्यस्य नानोपायसाध्यत्वादवघातमपहाय यदा नखदंशनकरमर्दनादिभिस्तत्र प्रवर्तते तदाऽवघातस्यानेन विधानात् । युगपदुभयप्राप्तावितरव्यावृत्तिपरविधिः परिसंख्याख्यः । यथा पञ्च पञ्चनखा भक्ष्या इति । इदं हि वाक्यं न पञ्चनखभक्षणपरं तस्य रागतः प्राप्तत्वात् । नापि नियमपरं पञ्चनखापञ्चनखभक्षणस्य युगपत्प्राप्तस्य पक्षे पुनरप्राप्तिविरहात् । तस्मादिदमपञ्चनखभक्षणनिवृत्तिपरमिति भवति परिसंख्याविधिरिति । तथा च—ऋतौ भार्यामुपेयादेवेति रागिण एव तत्कालीनविरागे नियमो न तु निसर्गाद्दोषेक्षणाद्वा तत्र निरस्तरागस्यासंभवात् । अत एव ब्रह्मचर्यं समाप्य गृही भवेदितिश्रुत्या गार्हस्थ्योपदेशे सत्यपि ब्रह्मचारिणो नैष्ठिकत्वमुपपद्यते । एवमग्नीषोमीयं पशुमालभेतेति शास्त्रोक्तस्याग्नीषोमीययागाङ्गपश्वालम्भनस्य रागप्राप्तस्यापि यागे विरागसंभवान्नियम एव । ननु कथमत्र नियमो युज्यते । मा हिंस्यात्सर्वा भूतानीतिश्रुत्या हिंसामात्रस्यानिष्टसाधनतावगमादिति चेन्न । सामान्यशास्त्रस्य विशेषशास्त्रेतरपरत्वनियमात् । निषिद्धस्यानिष्टानुबन्धित्वेऽपि विधेयस्य बलवदिष्टसाधनत्वाद्वा लोकवत्* । तथा सौत्रामण्यां सुराग्रहं गृह्णीतेति श्रुत्युक्तसुराग्रहस्यापि तस्यां कालपर्चादौ प्राप्तातिदेशायां सौत्रामण्यामेव नियमः । स चाऽऽथर्वणिकस्याशुक्लगुणस्य तस्यैव तदभिरुचेः । अत एव मनुः स्मरति—

* लोकवदिति । यथा भारोद्वहनस्य देहोपमर्दनरूपानिष्टहेतुत्वेऽप्यर्थप्राप्तिरूपबलवदिष्टसाधनत्वात्तत्र वोढुः प्रवृत्तिस्तद्वदित्यर्थः । यत्तु—तस्माद्यज्ञे वधोऽवध इत्युक्तं तद्राजसिकप्रकृतीननुसृत्यैव बोध्यं गुणप्राबल्ये दोषस्य प्रच्छन्नतयाऽवस्थानात्पराशरादीनां पारदार्यादिवत् । तथा च सूर्यः पशुरासीदित्यादिमन्त्रलिङ्गेन यज्ञार्थे वध्यस्य सूर्यलोकादिप्राप्तिश्रवणात्तद्भावेन स्वस्मिन्नपि दोषापेक्षया पुण्याधिक्याच्च तत्र राजसानां प्रवृत्तिरप्युपपन्नेति वार्तिकम् ।

यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम् ।
तद्ब्राह्मणेन नात्तव्यं देवानामश्नतां हविः ॥ इति ।

हिंसादिधर्मस्तु ब्राह्मणेष्वपि जातमात्रस्य प्रायः प्रबलतमोरजस्कस्य क्षत्रियादिजातीयस्यैव रजस्तमोभ्यामेव तत्प्रवृत्तेः । या पुनरात्मदृशां गुणातीतानां कस्यचित्कस्यचित्तदभिरुचिरसौ लोकसंग्रहार्थैव बलवदारब्धानुषङ्गादिति न शास्त्रविद्द्विसंवादः ॥ ४३ ॥

यो यच्छ्रद्दधाति तत्रैव तदधिकारमाह-

## तदीष्टे यच्छ्रद्धाता ॥ ४४ ॥

तदिति । श्रुतिस्मृतिपुराणशैवागमेषु यत्र यः श्रद्दधानस्तस्यैव तस्मिन्मुख्याधिकार इति भावः । अत एवाऽऽहुः—

सात्त्विके सात्त्विकं मुख्यं राजसे राजसं तथा ।
तामसे तामसं कर्म तद्धि तेषां निसर्गभाक् ॥ इति ॥ ४४ ॥

दृग्भ्यां दृश्यमानाभ्यामन्याऽपि ज्ञानोद्भाविका काचिदस्तीति दर्शयति—

## छन्नाऽन्या दृक् ॥ ४५ ॥

छन्नेति । अत्र दृगात्मा निहितशक्तिविशेषो येन निमीलिताक्षस्यापि विशिष्टज्ञानमुत्पद्यते । अन्या बाह्यनयनाभ्यां भिन्ना । छन्ना चेतसि निगूढा । अस्तीति शेषः । यद्यसौ विद्यते तर्हि आलोचनादिनैव प्रतिभातीति बोध्यम् ॥ ४५ ॥

## तद्वेद्यमृतं चलेन्दुवत् ॥ ४६ ॥

तदिति । तद्वेद्यं तया तृतीयया दृशा ज्ञेयम् । यत्तदृतं तथ्यं भवतीत्यर्थः । तत्र लौकिकदृष्टान्तमाह—चलेति । यथा घनगत्यादिवशाद्बहिर्लोचनाभ्यां प्रतीयमानस्यापि गतिमच्चन्द्रस्याचाञ्चल्यं प्रतीयते तद्वदित्यर्थः । तथा च—यथा दर्शनेन्द्रियं नेत्रयन्त्रे विलसद्घटादिज्ञानं जनयति तथाऽऽत्मनो दृक्शक्तिरप्यन्तरेव विजृम्भमाणा वस्तुतत्त्वमुद्भावयतीति भावः ॥ ४६ ॥

## न सर्वेषु सर्वस्मिन्नियतेः ॥ ४७ ॥

नेति । सर्वेषु मनुजेषु सर्वस्मिन्नर्थे न भाति सा दृगित्यर्थः । कुतो नियतेः प्रागर्जितकर्मविशेषाधीनत्वात् । अत एवोक्तं बुद्धिः कर्मानुसारिणीति ॥ ४७ ॥

## लुप्ताक्षोऽन्यः ॥ ४८ ॥

लुप्ताक्ष इति । अन्यस्तदक्षिहीनः । लुप्ताक्षश्चक्षुष्मानप्यचक्षुः । तत्त्वावगमानर्हत्वादिति भावः ॥ ४८ ॥

बुभुत्सुसाद्धि सर्वं शनैः करगवत् ॥ ४९ ॥

बुभुत्सुसादिति । सर्वं जडमजडं च जगत् । शनैः क्रमशः । बुभुत्सुसात्तत्त्वजिज्ञासोरायत्तं भवति । पारतन्त्र्यं दृष्टान्तेन विशेषयति–करगवदिति । करकलितामलकवदित्यर्थः । हिर्विद्वदनुभवद्योतकः ॥ ४९ ॥

पशुरविप्रेक्षोऽन्वर्थैक्यात् ॥ ५० ॥

पशुरिति । अविप्रेक्षो विशिष्टबुद्धिरहितः पशुरेतन्नाम्नाऽभिधीयते । कस्मादन्वर्थैक्यात् । पश्यत्यविशेषेणेतिव्युत्पत्तिसाम्यात् । तदाहुः—पश्यतेः कौ पशादेशे पशुरितिपदं स्मृतमिति । एतेन पदार्थानां सर्वत्र पृथक्प्रतीतिद्वारैव विशदायमानस्वरूपत्वाद्यत्र यस्याविविक्तबोधस्तत्रासौ न प्रकृष्टधीरिति सूचितम् । तथा च—यथा कीटपतङ्गविहंगपशुमानुषाणामुत्तरोत्तरेषु ज्ञानप्रकर्षादिद्धोत्कर्षताऽवभासते तथा मनुष्येष्वपि केवलेषु विवेकप्रकर्षादेव पूज्यताऽऽविर्भवतीत्यनुसंधेयम् ॥ ५० ॥

विदोऽप्यन्वञ्चो निसर्गस्य ॥ ५१ ॥

विदोऽपीति । विदस्तत्त्वज्ञास्तेऽपि निसर्गस्य निसर्गो नाम प्रकृतिः प्राक्तनधर्माधर्मयोः संस्कारो वर्तमानजन्माभिव्यक्तस्तस्यान्वञ्चः परतन्त्राः । विनाऽपि प्रयत्नेन जृम्भमाणत्वात्तस्येति भावः ॥ ५१ ॥

विमृश्यान्येभ्यो व्युत्पद्येरन्नसकृदावृत्त्या ॥ ५२ ॥

तस्माद्विमृश्येति । अन्येभ्यो गुर्वागमेभ्यः । विमृश्य वस्तुस्वरूपं ज्ञात्वा । असकृदावृत्त्या पुनः पुनरावर्तनेन । व्युत्पद्येरन्विशिष्टसंस्कारमुत्पादयेयुरित्यर्थः । तथा च—निजाध्यवसायेन वस्तुतत्त्वाभिज्ञानामभ्यासपाटवान्नवनवसंस्कारो जायते । तेन चाऽऽत्मनः परेषां च श्रेयः परमुदेतीति कुशलैर्यतितव्यम् ॥ ५२ ॥

यतिनश्चातुर्विध्यमाह—

कुटीचकबह्वोदहंसपरहंसा यतयः ॥ ५३ ॥

कुटीचकेति । ये च ब्रह्मणि यतनशीलास्ते यतयः कुटीचकादिनामानः । तत्र कुटीचकः स्वाश्रमधर्मप्रधानः । बह्वोदः कर्मोपसर्जनीकृत्य ज्ञानाभ्यासप्रधानः । हंसो ज्ञानाभ्यासनिष्ठः । परहंसो निष्क्रियः ॥ ५३ ॥

नानध्यात्मदृशि शिवं शिवम् ॥ ५४ ॥

इति वैयासिके सिद्धान्तदर्शने वेदान्तविज्ञाने परापरतत्त्वनिरूपणे तृतीये मुक्तिपाठे चतुर्थः प्रपाठः ।

नेति। अनध्यात्मदृशि, अध्यात्मदर्शिविरहविशिष्टे जगति शिवं वस्तुतो नास्तीत्यर्थः। तथा हि—ये त्विह कोऽहमिति बुभुत्सया स्वस्यैव तत्त्वं न विदुस्ते तावदनुशासनादिना कथं परेषामभ्युदयमानयेयुः। अत एव श्रुतिः— अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितं मन्यमानाः । दंद्रम्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धाः। तस्मादिहानात्मदर्शिभ्यो यः कुशलः स चाऽऽपातदृष्ट्या रमणीयोऽप्याभास एवेति विद्वत्सिद्धान्तः।

इति तृतीये मुक्तिपाठे चतुर्थः प्रपाठः ॥ ४ ॥

इति वैश्वदेवे भाष्ये निरञ्जनाख्ये तृतीयो मुक्तिपाठः।

---

अथ चतुर्थो ज्ञानपाठः।

---

तत्र प्रथमः प्रपाठः।

---

मुक्तिं निरूप्य तत्कारणं विशिष्य निरूपयितुं चतुर्थपाठमारभते—

**चैतन्यं हि धीस्थं वृत्त्या स्फुरज्ज्ञानं गवाक्षार्कवत् ॥ १ ॥**

चैतन्यमिति। चैतन्यं भूतभौतिकप्रपञ्चाधिष्ठानम् । धीस्थं बुद्धिदर्पणे प्रतिफलितं वृत्त्या ज्ञेयाकारया स्फुरदवभासमानं किमिव गवाक्षार्कवत्। नटत्करेण गवाक्षातपवत्। ज्ञानं नामेत्यर्थः । स्फुरणरूपस्यापि पुनः स्फुरणं धीवृत्त्यैवोपचर्यते। वृत्तेरर्थाकारित्वे तदुपहितचैतन्यस्यापि तदाकारित्वावश्यंभावात् । अत्र यथा गवाक्षातपः खस्थमार्तण्डप्रभयैकोऽपि करनर्तनेनैव पृथक्प्रतीयते तथा धीवृत्त्या धीस्थचिदपीति बोध्यम्। यदाकारेण चिदाभासस्फुरणं स एव तद्विषयः। स च द्विविधो बाह्य आन्तरश्च। तत्र बाह्यः शब्दस्पर्शादिः प्रमाणेन श्रोत्रादिना प्रकाश्यः। आन्तरः सुखदुःखादिर्बुद्धिरथ कूटस्थेनैव भास्यः। एतेन स्फुरणात्मके विषयिणि ज्ञाने विषयता न संभवतीत्यवधेयम्। हिरत्र ज्ञानस्य चैतन्यानतिरेकं गमयति। अत एव श्रुतिः— सत्यं ज्ञानमनन्तं ब्रह्मेति । धीपदं धीन्द्रियान्तःकरणतत्कारणोपलक्षणम् । तेन बाह्ये निर्विकल्पाख्ये सुषुप्तौ चाज्ञानविषयके ज्ञानत्वमव्याहतम् ॥ १ ॥

**वृत्तिश्च भेदाभानात् ॥ २ ॥**

वृत्तिरिति। वृत्तिर्बुद्धेस्तदाकारपरिणामः । साऽपि ज्ञानं व्यपदिश्यते। कस्माद्भेदाभानात्। व्यवहारवेलायां वृत्तिज्ञानयोर्भेदप्रतीतिविरहात् । तथा चोक्तम्—

नैवाल्पबुद्ध्या शक्योऽयं विवेको वृत्तिबोधयोः।
तार्किका यत्र संमूढाः सांख्यानां श्रेष्ठता यतः ॥

विज्ञानवादिनो बौद्धा वृत्तिज्ञानाविवेकतः ।
ज्ञानात्मत्वश्रुतौ मूढा मेनिरे क्षणिकां चितिम् ॥ इति ॥

एतदभिप्रायेण श्रुतिरप्याह—ह्रीर्धीर्भीरेतत्सर्वं मन एवेति ॥ २ ॥

ज्ञानं विभजति—

**द्विधाऽनुभूतिः स्मृतिश्च ॥ ३ ॥**

द्विधेति । द्विविधो ह्यनुभव आविद्यक ऐन्द्रियकश्च । तत्राऽऽद्यः सुषुप्ति-कालीनः । द्वितीयस्तु जाग्रत्स्वप्नकालीनः ॥ ३ ॥

तत्र पुनरैन्द्रियकं विभजति—

**त्र्याद्या प्रत्यक्षानुमानशाब्दसंभेदात् ॥ ४ ॥**

त्रयीति । आद्याऽनुभूतिः ॥ ४ ॥

तत्र प्रत्यक्षं लक्षयति—

**संप्रयोगजं प्रत्यक्षम् ॥ ५ ॥**

समिति । संप्रयोगजं संनिकर्षजम् । संप्रयोगश्च चिदाभासस्य स चान्तरे साक्षाद्बाह्ये पुनरिन्द्रियद्वारेण जायते । सर्वत्र लौकिकप्रत्यक्षे तत्तद्विषयसंनि-कर्षापेक्षयाऽन्तःकरणस्य तदाकारित्वं परोक्षे तु तदनपेक्षतयैवेति बोध्यम् । अत्राऽऽहुः—

धत्ते चक्षुस्तदाकारं विसृप्यार्थं स्वतेजसा ।
अन्यत्तदाकृतिं धत्ते यद्यर्थो यत्रगस्तदा ॥ इति ॥

अत एवेदं वस्तुतन्त्रमित्यायातम् ॥ ५ ॥

तस्य पुनस्त्रिभिरुत्पद्यमानत्वेन त्रैविध्यमाह—

**खमनोधीभ्यः ॥ ६ ॥**

खेति । तत्प्रत्यक्षं खमनोधीभ्य इन्द्रियान्मनसो बुद्धेश्च जायते । तत्र बाह्यं प्रागिन्द्रियात्ततो मनसस्ततो बुद्धेश्च संभवति । तथा हि—यथा स्फटिकबिम्बं स्वच्छतेजसा घटादीनुपादाय तदाकारमादत्ते तथेन्द्रियाण्यपि स्वकीययन्त्रद्वारेण विषयमासाद्य तदाकारं परिणमन्ति । स एव परिणामो वृत्तिरित्युच्यते । तयैव वृत्त्या पूर्वं ज्ञानं निर्विकल्पाख्यमुत्पद्यते । ततः पुनः प्रत्यावृत्त्या भ्रूमध्ये मनसि तथैव परिणते किमिदमिति संशयाख्यं भवति । ततः प्रागदृष्टे तत्तद्वस्तुकल्पनं दृष्टे तु तत्स्मरणं प्रत्यभिज्ञात्मकं । जायते । ततो ऽप्युपरि बुद्धौ तद्वत्परिणतायां घटादिरेवायमिति निश्चयाख्यं भवति । तत्राऽऽ-द्यमैन्द्रियकमप्रस्फुटं द्वितीयं मानसं किंचित्स्पष्टं तृतीयं बौद्धं सुस्पष्टं जायते

किं तु समयस्य सूक्ष्मतया तत्पार्थक्यानुभवविरहात्तत्त्रैविध्यं सहसा नावभासते । तत्सर्वमेवोत्पन्नमात्रमतीव त्वरितं विसृप्य विसृप्य क्रमादहंकारेणान्वेति । तेनाहं तज्ज्ञानवानित्यभिमानः स्फुरति । तच्चाज्ञाननिवृत्त्यैव जायते । तथा हि—साक्षात्कारे घटादौ वृत्तिफलचैतन्ययोरुभयोरेव व्याप्तिः । तत्र तावद्वृत्तिव्याप्त्या तदज्ञानापसरः । फलव्याप्त्या च घटादिस्फुरणम् । तदुक्तं च—

बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम् ।
तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत् ॥ इति ॥

ताश्च वृत्तयो विषयद्वारेण क्वचित्स्वेच्छया चेन्द्रियोत्तेजनाज्जायन्ते । यदि ता एव धीन्द्रियमनोबुद्धयः स्वेच्छया कांश्चिद्विषयानवष्टभ्य पुनः पुनस्तथैव व्याप्रियन्ते तर्हि शनैस्तत्तद्विषयाणामङ्गप्रत्यङ्गाद्युन्मीलनेन तत्तद्वस्तुविज्ञानं चित्तमारोहतीति बुभुत्सुहृद्यम् । एतदुक्तं भवति—ज्ञानं बाह्यघटादिगतम् । चिदाभासविषयोभयैकप्रकाशरूपं जायते । आत्मसमवेतं तु नटत्करस्थगवाक्षातपवदाभासस्फुरणमात्रम् । तत्र चोभयोः प्रकाशयोरेकतरो मुख्यश्चेदन्यतरो गौणतयाऽवभासते । यथाऽयं घटः, घटमहं पश्यामीति । एवं जातेर्जातिमद्भिन्नत्वात्क्रियादेरप्युत्पत्तिमात्रेण तद्वद्भिरेवैकतापन्नत्वादध्यक्षता । अन्तर्वृत्तिविशेषरूपाणां तु सुखादीनां कूटस्थभास्यानामज्ञानविरहेणेन्द्रियसंनिकर्षानपेक्षणात्तज्जन्मनैवाऽऽभासस्य तदाकारितेति बोध्यम् । अत्र तु घनतिमिरस्थे घटादौ मानवादीनां न चाक्षुषता । तत्र तदिन्द्रियस्य तत्तमोभेदकशक्तिविरहेण संनिकर्षविरहात् । यत्तु शक्तिस्वीकारे विधुराणां न्यायरसिकानां तत्राऽऽलोकसहकारिताकल्पनं तद्दूरदृग्भ्यो न रोचते । मातृमण्डले मार्जारादौ च तिमिरभेदशक्तिमच्चक्षुषि व्यभिचारदर्शनात् ॥ ६ ॥

तत्रालौकिकसंनिकर्षोऽप्यस्तीत्याह—

## योगजश्च प्रत्यासादः ॥ ७ ॥

योगजो योगाभ्यासजनितो धर्मः । स च प्रकृष्टसत्त्वरूपः । प्रत्यासादः प्रत्यासत्तिः । तथा च प्रकृष्टसत्त्वं स्वच्छतया सर्वं संनिकृष्टं विप्रकृष्टं चार्थं व्याप्नोतीति प्रत्यासाद उच्यते । स च बाह्येन्द्रिययन्त्रानपेक्षतयैव जायते । प्रत्यक्षादन्यत्परोक्षम् । तच्च द्विधाऽऽहुर्यथा—

कर्तृतन्त्रोऽन्यतन्त्रश्च परोक्षानुभवो द्विधा ।
आद्यो विचारजः शेषः केवलाप्तवचोभवः ॥ ७ ॥

प्रत्यक्षं निरूप्यानुमानं निरूपयति—

व्याप्तिबोधजमनुमानम् ॥ ८ ॥

तत्त्रिविधं पूर्ववच्छेषवत्सामान्यतो दृष्टं च । तत्र पूर्ववत्कारणलिङ्गकम् । यथा मेघोन्नत्या वृष्टेरनुमानम् । शेषवत्कार्यलिङ्गकम् । यथा धूमेन वह्नेरनुमानम् । ताभ्यामन्यत्सामान्यतो दृष्टम् । तत्पुनः स्वार्थपरार्थभेदाद्द्विविधम् । तत्र स्वार्थं स्वमात्रप्रयोजनकं तत्त्वमसीत्यादौ द्रष्टव्यम् । परार्थं परमात्रप्रयोजनकं नास्तिकादिसंशयनिराकरणार्थं जगदिदं सकर्तृकं कार्यत्वादित्याद्यनुसंधेयम् ॥ ८ ॥

अनुमितिहेतुर्या व्याप्तिस्तामाह—

साध्याव्यभिचारिता हेतौ व्याप्तिः ॥ ९ ॥

साध्येति । साध्याव्यभिचारिता साध्यवद्वृत्तित्वे सत्यनावृत्तिता । तथा च हेतोः साध्यवद्वृत्तित्वे सत्यन्यावृत्तित्वमिति तल्लक्षणम् । तथा हि—वह्निमानयं धूमादित्यत्र हेतोर्धूमस्य साध्यवति वह्निमति महानसादौ वृत्तित्वे सति साध्यवद्भिन्ने जलह्रदादाववृत्तित्वं व्याप्तिः । अत्र च यत्र यत्र धूमस्तत्र तत्र वह्निर्यथा महानसमित्यन्वयः । यत्र न वह्निस्तत्र न धूमो यथा जलह्रद इति व्यतिरेकश्च । तथा च पूर्वं महानसादौ धूमे वह्निव्याप्तिर्निश्चिता । तदनन्तरं कदाचिद्धूमस्य पर्वते दर्शनम् । तदनन्तरं यत्र यत्र धूमस्तत्र तत्र वह्निरिति व्याप्तिस्मरणम् । तदनन्तरं पर्वतोऽयं वह्निमानित्यनुमितिर्जायते । धूमवानयं वह्नेरित्यत्र तु हेतोर्वह्नेः साध्यवति महानसादौ वृत्तित्वेऽपि तदन्यस्मिन्नयःपिण्डादौ वृत्तित्वान्न व्याप्तिरिति । न चेदं हरीच्छागोचरो जन्यत्वादित्यादौ साध्यवदन्याप्रसिद्धेरव्याप्तिरिति वाच्यम् । तत्र साध्यवदन्यासिद्धावपि तदन्यावृत्तित्वसिद्धेर्नान्तरीक्षेऽग्निश्चेतव्य इतिवत् । एवमन्यदनुसर्तव्यम् ॥ ९ ॥

शाब्दं निरूपयति—

पदधीजं शाब्दम् ॥ १० ॥

पदेति । पदधीजं पदज्ञानजम् । यथा राजपुरुषः स्वर्गकामो यजेत । तथा च विज्ञातशब्दादर्थाभिधानेन यद्वाक्यार्थविज्ञानं तच्छाब्दमिति फलितम् । तत्र वाक्यं हि द्विविधं लौकिकालौकिकत्वभेदात् । तत्राऽऽद्यं लोकमात्रव्यवहार्यं द्वितीयं वैदिकमिति बोध्यम् ॥ १० ॥

भ्रमं निरूपयति—

प्रातिभासिकावभासोऽध्यासः ॥ ११ ॥

प्रातिभासिकेति । प्रतिभासेन दीव्यतीति प्रातिभासिकः । स्वाश्रयसत्तया सत्तावानिव यथा मरीचिकादिः । प्रातिभासिकवस्तुविषयको बोधोऽध्यास

इत्यर्थः । प्रातिभासिकोऽयं द्विविधः—मूलाज्ञानजो लौकिकाज्ञानजश्च-तत्राऽऽद्यो व्योमादिप्रपञ्चः । द्वितीयः शुक्तिरजतादिः । एवं च शुक्तिरजतमित्यत्र प्रातिभासिकरजतस्य लौकिकतात्त्विकरजतत्वाभावाद्भ्रान्तिविगमे शुक्तिर्न रजतमिति त्रैकालिकनिषेधस्यापि नासंगतिः । न च भ्रान्तिस्थले शुक्तिकादौ प्रसिद्धरजतादेर्ज्ञानमेव केवलं प्रतिभासते न तत्राऽऽध्यासिकं वस्तु किंचनास्तीति धीबलमतं युक्तमिति वाच्यम् । प्रत्यक्षसामान्यं प्रति तत्तद्विषयसंनिकर्षस्य नियमात् । न हि घटसंनिकर्षेण पटज्ञानं जायते । न चात्र ज्ञानलक्षणालक्षणसंनिकर्षकल्पनं साधीयः । शुक्तिरजते रजतमिदं चक्षुषा पश्यामीति लौकिकप्रत्यक्षविषयत्वात् । तत्र रजतादिवत्कांस्यादेरपि तत्संनिकर्षापत्त्या भानापत्तेः । तदभ्युपगमे च मानाभावात् । अन्यथा वह्निमान्धूमादित्यादौ तथात्वेन वह्न्यादेः प्रत्यक्षापत्त्याऽनुमित्यभ्युपगमस्य प्रमत्तगीततापत्तेश्च । किंच, यदि शुक्तिरजतस्य रजतत्वं न स्यात्तर्हीदं रजतमित्येवं दृश्यतैव न स्यात् । यन्नास्ति तदिदंतया न जात्वपि दृश्यम् । यथा खपुष्पमिति नियमात् । किंच, मणिमन्त्रादिशक्त्या विलसन्नगरादेर्दर्पणादिस्थस्फुरन्मार्तण्डप्रतिबिम्बस्य च दर्शनादपि तदुरीकार्यम् । तथा हि—प्रातिभासिकं नाम पदार्थमन्तरेण कुहकिनो मायया जृम्भमाणं गन्धर्वनगरादिकं पूर्वमदृष्टं दृश्यते कथं वा मुकुरादियोगेन तत्र गृहे च भासमानो मार्तण्डः प्रतप्तुमर्हति । न चासौ खस्थ एवेति वक्तुं युज्यते । चाञ्चल्यादिमत्त्वात् । बिम्बभूतस्य तस्य दर्पणे गृहाद्यभ्यन्तरे वा प्रवेशायोगाच्च । किंच प्रतिफलितस्य तुण्डस्य ग्रीवास्थमुखत्वाङ्गीकारे चक्षुर्दर्शनं कथमुपपद्यते स्वचक्षुषा स्वचक्षुरीक्षणस्य युगसहस्रेणाप्यशक्यत्वात् । तस्मात्प्रतिबिम्बमिदमिति मृगतृष्णा भ्रमयतीति च साधु संगच्छते । किंच भ्रान्तिकालोत्पन्नाध्यासिकपदार्थानभ्युपगमे स्वप्ने योषित्सङ्गो नोपपद्यते । न खल्वत्र केवलं तज्ज्ञानमेवोपजायते न तत्सङ्गोत्पत्तिरिति वक्तुं शक्यते तत्र कथंचिदङ्गनासङ्गं विना, विना च कथंचन कर्मेन्द्रियव्यापारं केवलेन तज्ज्ञानेनैव रेतःस्तनानुपयोगात् । तदानीं त्वगिन्द्रियादीनां स्वकीययन्त्रसङ्गविरहेण तदङ्गसङ्गज्ञानानुपपत्तेश्च । अत एव स यत्र स्वपितीत्युपक्रम्य श्रुतिराह—न तत्र रथा रथयोगाः पन्थानो भवन्त्यथ रथान्रथयोगान्पथः सृजत इति । इत्थंभूते हि लौकिकतार्किकधीरतीव क्षीणतामेति । नन्वेवं सति भगवति सर्वज्ञेऽपि भ्रान्तिरस्तीति चेत्सत्यमस्ति मायाविनीव वक्ष्यमाणा सोपाधिर्न तु दोषजनिका निरुपाधिरित्यैश्वर्यमक्षतम् ॥ ११ ॥

भ्रमं विभजन्नाह—

चतुष्कः ॥ १२ ॥

चतुष्क इति । चतुष्कश्चतुरवयवश्चतुःसंख्यो वा । लौकिकोऽलौकिकः संवादी विसंवादी चेत्यर्थः । तत्र लौकिकः शुक्तिरजतादिज्ञानरूपः । अलौकिको देहात्मादिज्ञानरूपः । संवादी भ्रमादपि यस्मादर्थसिद्धिर्यथा मणिप्रभायां मणिरयमिति । तदन्यो विसंवादी यथा शुक्तौ रजतमिदमिति ॥ १२ ॥

तत्र विसंवादिनोऽपि द्वैविध्यमाह—

विसंवादी द्विकः ॥ १३ ॥

विसमिति । द्विकः सोपाधिर्निरुपाधिश्चेत्यर्थः । तत्र ज्ञायमानेऽप्यधिष्ठानस्वरूपे यो भ्रमः स सोपाधिः । यथा शङ्खोऽयं पीत इति । तत्र चासत्तावरणविरहेऽपि प्रत्यक्षभानावरणसत्त्वाद्विक्षेपशक्तिराविर्भवति । तदन्यो निरुपाधिः ॥ १३ ॥

भ्रमं निरूप्य प्रमां निरूपयति—

प्रमाऽन्या ॥ १४ ॥

प्रमेति । अन्या भ्रमाद्भिन्ना । तथा च तात्त्विकार्थावभासः प्रमेत्यर्थः । सा च द्विधा क्लृप्ता कल्प्या च । तत्राऽऽद्या ब्रह्मविषयाऽलौकिकी द्वितीया घटादिविषया लौकिकी । तत्करणानि धीन्द्रियव्याप्तिबोधाप्तवाक्यानि प्रमाणानि । यद्यपि—

> प्रत्यक्षमनुमानं च शब्दोऽर्थापत्तिरेव च ।
> उपमानानुपलब्धी पूर्वभाष्योदितानि षट् ॥
>
> तथैतिह्यादिकं मानमितिहासादिसंमतम् ।

तथाऽप्यर्थापत्त्यादीनामनुमानाद्यन्तर्भावान्न प्रमाणान्तरता । तत्रार्थापत्तिः कथमस्योपपत्तिरित्यापत्तिः । तत्प्रमेयं तु पीनोऽयं बटुर्दिवा न भुङ्क्त इत्युक्तौ रात्रिभोजनम् । उपमानं सादृश्यबुद्धिः । यथा गोसदृशो गवय इति । अनुपलब्धिर्यदि स्यादुपलभ्येतेत्यापत्तिः । तत्प्रमेयस्तु गृहे घटाभावः । ऐतिह्यं परम्परागतोपदेशः । यथेह वटे यक्षः प्रतिवसतीति । अत एवोक्तं मनुना—

> प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् ।
> त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥ इति ॥ १४ ॥

प्रमाणेषु कतमन्महीय इति निरूपयन्नाह—

मानं गुर्वाम्नायो दोषासंपृक्तेः ॥ १५ ॥

मानमिति । आम्नायो वेदः । मानं प्रमाणम् । गुरु प्रधानम् । कुतः । दोषासंपृक्तेः । भ्रमप्रमादविप्रलिप्सादिदोषसंपर्कविरहात् ॥ १५ ॥

सर्वविद्यानुग्राहकमप्यनुमानं शास्त्रनिरपेक्षं चेन्न बलीयो मानमिति दर्शयन्नाह—

नानपेक्षमनुमानं दुष्टजन्माप्रतिष्ठानाभ्याम् ॥१६॥

नेति । अनुमीयतेऽनेनेत्यनुमानं न्यायापरपर्यायम् । अनपेक्षं शास्त्राननुगतम् । न गुरु मानमित्यन्वयः । कुत आह दुष्टेति । भ्रमप्रमादादिदोषयुक्तात्पुरुषाज्जन्म दुष्टजन्म । पुरुषबुद्धिवैचित्र्येणानियतावस्थानमप्रतिष्ठानं ताभ्यामित्यर्थः । तथा हि—यो यदिह स्वसंविदा निरूपयति ततः सूक्ष्मधीश्चेत्तदन्यथयति । ततोऽपि सूक्ष्मधीः पुनस्तदन्यथयितुमर्हतीति केवलो न्यायो मानमनैकान्तिकमिति भावः । तदुक्तं च—

यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥

अत एव न्यायभाष्यकृताऽपि प्रत्यक्षागमाश्रितमनुमानम् । यत्पुनरनुमानं प्रत्यक्षागमविरुद्धं न्यायाभासः स इत्युक्तम् । एवं च नरकपालं शुचि प्राण्यङ्गत्वाच्छङ्खशुक्तिवदित्यनुमानं न प्रमाणम् ।

मलमूत्रपुरीषास्थिनिर्गतं ह्यशुचि स्मृतम् ।
नारं स्पृष्ट्वा तु सस्नेहं सचेलो जलमाविशेत् ॥

इत्यागमविरोधात् । अत एव कौर्मे—

श्रुतिसहायरहितमनुमानं न कुत्रचित् ।
निश्चयात्साधयेदर्थं प्रमाणान्तरमेव च ॥
श्रुतिस्मृतिसहायं यत्प्रमाणान्तरमुत्तमम् ।
प्रमाणपदवीं गच्छेन्नात्र कार्या विचारणा ॥ इति ।

यत्तु—

केवलं शास्त्रमाश्रित्य न कर्तव्यो विनिर्णयः ।
युक्तिहीनविचारे तु धर्महानिः प्रजायते ॥

इति बृहस्पतिस्मरणं तत्संदिग्ध एवार्थे बोध्यम् । तत्रैव न्यायावतारस्य सर्वनिबन्धृसिद्धत्वात्साकाङ्क्षत्वादविसंवादाच्च । अत एव स्मृतिः—

स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः ।
तुल्यप्रमाणसत्त्वे तु न्याय एव प्रवर्तकः ॥ इति ॥ १६ ॥

मा भूदनुमानं बलीयः प्रत्यक्षस्य तथात्वमस्त्विति चेदाह—

**प्रत्यक्षमप्यर्थबाधनात् ॥ १७ ॥**

प्रत्यक्षमिति । प्रत्यक्षमिन्द्रियसंनिकर्षजम् । तदपि न गुरुमानमित्यर्थः । कस्मादर्थबाधनात् । प्रत्यक्षितस्य शुक्तिरजतनभोनीलिमवितस्तिप्रमाणार्केन्दुमण्डलगन्धर्वनगरादेर्मिथ्यात्वावगमात् । तस्मादेक एवाऽऽगमो मानं मुख्यमिति वेदान्तराद्धान्तः । एतेन धर्मनिर्णये वेदस्य प्रबलत्वं पदपदार्थनिर्णये तु लोकवेदयोस्तुल्यत्वमिति यत्तार्किकाभिधानं तल्लौकिकधियैव न तु परमार्थादित्यौपनिषदैरनाघ्रेयम् ॥ १७ ॥

अनुभूतिं निरूप्य स्मृतिं निरूपयति—

**संस्कारजं स्मृतिः ॥ १८ ॥**

संस्कारजमिति । संस्कारजं संनिकर्षादिना प्रादुर्भूय पश्चात्तनुतामापन्ना या वृत्तिस्तस्या जायमानं ज्ञानं स्मृतिरित्यर्थः । अस्य विषया मनोमयाः । तेषां पूर्वानुभूतैर्यत्तुल्यतयाऽवभाषणं तत्स्मरणमिति व्यवहारः । नन्वत्र विषया मृन्मयादिरूपाः कथं न स्युरात चेन्न । दृष्टे घटादौ नष्टेऽपि स्मरणोत्पत्तेः । न हि विषयविरहेण विषयी संभवति । यदि पुनरसत्यपि मृन्मयादावर्थे स्मरणबलादेव विषयताकल्पनं स्यात्तर्हि साम्राज्येच्छायां विजृम्भमाणायां तद्बलादपि हेतुवादिनां सर्वैश्वर्यकल्पना स्यादिति सुधीभिः स्मार्यम् । स्वाप्नज्ञानं तु न स्मरणं स्वप्ने प्रागननुभूतानां भूतवेतालादीनां गन्धर्वनगरादीनां च प्रतीयमानत्वात् । रथमिमं पश्यामीत्यादिरूपतत्कालीनप्रतीतिविरोधापत्तेश्च । किंतु अनुभूतिरेव । स्वप्नोत्थितस्य स्वप्ने रथमहमद्राक्षमित्यादिस्मरणात् । यदा कर्मसु काम्येषु स्त्रियं पश्यतीति स्वप्नाधिकारश्रुतेश्च । नन्वनुभवोऽपि तद्रूकुं कथं युज्यते तत्र रथाद्यसत्त्वेन संनिकर्षविरहादिति चेन्न । स्वप्ने जाग्रद्वस्तुविरहेऽपि तत्कालोत्पन्नप्रातिभासिकविषयेन्द्रियचक्षुरादीनां सत्त्वात् । तथा हि-यथा दूरत्वादिदोषोद्भवा शुक्तिकादिविषयिण्यविद्या रजतादीनि रचयति तथा स्वप्नेऽपि तमोवृत्त्या श्रोत्रादिषु तत्तदिन्द्रियसङ्गविगमादिदोषजा वासनावलम्बिन्यविद्या स्वाप्नप्रपञ्चमुद्भावयति । तथा च श्रुतिः-अथ रथान्रथयोगान्पथः सृजत इति ।

जाग्रत्प्रपञ्चस्तु तुल्योऽपि मायिकत्वे स्वाप्नवत्प्रतिदिनं न बाध्यते किंत्वात्म-दर्शनपर्यन्तं तिष्ठतीति विशेषः ॥ १८ ॥

संप्रति ज्ञानस्यैकत्वं नित्यत्वं च साधयति—

विचित्रमपीवाऽऽतपः ॥ १९ ॥

विचित्रमिति । विचित्रमपि विषयाणां संनिकर्षादीनां च वैलक्षण्येन विलक्ष-णमपि ज्ञानमातप इव । यथाऽऽतपो भास्यानां घटपटादीनामाकारमादधानस्तद्व-देकमेवेत्यर्थः । एवं जाग्रत्स्वप्नसुषुप्तिषु विषयाणां स्थूलसूक्ष्मकारणरूपाणामेव परस्परं वैचित्र्यं न तज्ज्ञानस्य । तथा दिनमासाब्दयुगकल्पेष्वपि गतागम्येष्वे-कमेव ज्ञानं नोदेति न वाऽस्तं याति किंत्वेकरूपेण सदैव विराजते ॥ १९ ॥

नूत्नमिव वृत्तेः ॥ २० ॥

नूत्नमिति । नूत्नमिव भातीति शेषः । कुतो वृत्तेश्चित्तस्य घटाद्याकारप-रिणामात् । तथा च वृत्तीनां नवत्वाद्वैचित्र्याद्वा तदुपहितस्य ज्ञानस्यापि तथात्वं व्यपदिश्यत इति श्रुतिमुकुटम् ॥ २० ॥

नानृतमनृतस्यापि स्वाप्नवत् ॥ २१ ॥

इति चतुर्थे ज्ञानपाठे प्रथमः प्रपाठः ॥

---

नेति । अनृतस्यापि मिथ्याभूतस्यापि वस्तुनो ज्ञानं नानृतमित्यन्वयः । किमिव स्वाप्नवत् । यथा मृषाभूतेऽपि स्वाप्नवस्तुनि तदवगतिर्न मृषा प्रतिबुद्धेऽपि तदवभासमानत्वात् । न हि स्वप्नभङ्गे तत्रानुभूतस्य रथाश्वादेर्बाध्यमानत्वेऽपि तज्ज्ञानं बाध्यते तद्वत् । परं तु विषयस्य मृषात्वेन ज्ञानस्यापि तथात्वं लोके-रुपचर्यते ॥ २१ ॥

इति चतुर्थे ज्ञानपाठे प्रथमः प्रपाठः ॥ १ ॥

---

अथ चतुर्थे ज्ञानपाठे द्वितीयः प्रपाठः ।

---

इदानीं कैवल्यहेतुभूतमात्मज्ञानं प्रकटयितुमादौ तद्विभजति—

चतुर्धाऽध्यात्मं श्रवणाद्याम्नायात् ॥ १ ॥

चतुर्धेति । अध्यात्ममात्मानमधिकृत्य विलसज्ज्ञानं चतुर्धेत्यन्वयः । कुतः

श्रवणाद्याम्नायात् । श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षात्कर्तव्यश्चेति श्रुत्या श्रवणमनननिदिध्यासनसाक्षात्कारोपदेशात् । श्रवणं श्रुतेर्व्यापारो मननं मनसो निदिध्यासनं साक्षात्कारश्च बुद्धेरेवेति द्रष्टव्यम् ॥ १ ॥

तच्चतुष्कं क्रमेण वर्णयन्नाह—

श्रवणं नाम महावाक्याधिगमः ॥ २ ॥

श्रवणमिति । महावाक्याधिगमो महावाक्येन तत्त्वमस्यादिनाऽधिगमोऽहं ब्रह्मास्मीत्यर्थभानं श्रवणं नामेत्यर्थः । तथा च तत्त्वमस्यादिवाक्येनाहं ब्रह्मास्मीति ज्ञानं श्रवणमिति भावः । अथ तत्त्वमसीत्यस्य तादृगर्थः कथं संघटते तत्त्वमोर्विरुद्धार्थकत्वात् । मैवम् । तच्छक्यार्थयोर्भिन्नत्वेऽपि लक्ष्यार्थैक्यात् । तथा हि—तत्र तत्पदवाच्यं कारणदेहोपहितमीश्वरचैतन्यम् । तल्लक्ष्यं तु ब्रह्मचैतन्यम् । त्वंपदवाच्यं लिङ्गदेहोपहितं जीवचैतन्यं तल्लक्ष्यं तु कूटस्थचैतन्यम् । तथा च सति सोऽयं बटुरित्यत्र तत्कालैतत्कालयोः परित्यागेन पिण्डैक्यवत्तत्त्वमोर्वाच्ययोः कारणलिङ्गदेहयोस्त्यागेन चैतन्यैक्यं भासते । ब्रह्मकूटस्थयोर्भेदस्तु वाङ्मात्रेणैव महाकाशघटाकाशवदिति महावाक्यार्थः ॥ २ ॥

क्रमप्राप्तं मननमाह—

मननं चेदुपपद्यते ॥ ३ ॥

मननमिति । यदि श्रुतार्थो युक्तियुक्तो भवति तदा तदधिगमो मननं नामेत्यर्थः । यद्यप्यहमस्मीत्यस्मत्प्रत्ययगोचरे तिर्यगन्तानामपि सदैवापरोक्षरूपे स्वस्मिन्नात्मनि विचिकित्सानुदयेन विचारो नापेक्ष्यते तथाऽप्यात्मनो देहेभ्यो भिन्नत्वेन ब्रह्मणा सार्धमभिन्नत्वेन च प्रतीतिविरहात्तदर्थमात्मस्वरूपं विचारणीयम् । तत्र संशयाः—आत्मा देहेभ्योऽतिरिक्तो न वा । तदतिरिक्तत्वेऽपि तस्य ब्रह्मणा सार्धमैक्यं न वा । तदैक्येऽपि तज्ज्ञानं मुक्तिसाधनं न वेति । तत्राऽऽद्यः प्रागुक्तान्वयव्यतिरेकादिभिर्निरसनीयः । द्वितीयो जीवस्य चित्प्रतिबिम्बरूपत्वं प्रतिबिम्बस्य च वस्तुतो बिम्बानतिरिक्तत्वमिति प्रपञ्चितेन मार्गेण । तृतीयश्च बन्धमोक्षस्वरूपयोः प्रागुपवर्णितयोरालोचनेनापसरणीयः । एवमन्योऽपि विचिकित्साभञ्जनोपायः सततं ब्रह्मविद्यामनुसंधाय स्वसंविदा स्वतन्त्रीकर्तव्यः ॥ ३ ॥

निदिध्यासनमाह—

वृत्तिसंतानो निदिध्यासनम् ॥ ४ ॥

वृत्तीति। वृत्तिसंतानो वृत्तेरहं ब्रह्मेत्याकाराया मनोऽव्यापारेण संभावितार्थाया: संतानः प्रवाहः। तथा चासंभावनानिवृत्तिकालीनाहं ब्रह्मास्मीतिवृत्तिप्रवाहो निदिध्यासनमिति भावः। एवं च सर्वथा संशयनिवृत्तिविरहेऽपि निदिध्यासनसंभवात्तन्निरसनार्थं मननोत्तरं निदिध्यासनं तदुत्तरं पुनर्मननमित्यभ्यसनीयम्। तदभ्यासनिरतस्तु मौनशीलत्वान्मुनिरित्युच्यते। यदा तत्पाटवेन ध्याता द्वैतं विस्मरति तदाऽसौ विजने वासाद्गहनवासीति च भण्यते। यदा तु वक्ष्यमाणसाक्षात्कारपाटवेन निरस्ताविद्यस्तदाऽयं संसारसागरपारगतत्वादृषिरित्युच्यते ॥ ४ ॥

साक्षात्कारं निर्वक्ति—

स एवाविपर्ययः साक्षात्कारः ॥ ५ ॥

स इति। स एव निदिध्यासनसंस्कृताहं ब्रह्मेतिवृत्तिप्रवाह एव। अविपर्ययो न भवति विपर्ययो देहात्मत्वजगत्सत्यत्वभानरूपो यस्मादिति विग्रहः। तथा च संशयासंभावनाविपरीतभावनानिवृत्तिकालीनाऽहं ब्रह्मास्मीतिवृत्तिः साक्षात्कार इति फलितार्थः। तत्काले तु विपरीतभावनापायेन तद्वृत्तेरपि भानाभावात्केवलमखण्डं ब्रह्मैव प्रतिभाति। एवं तदानीं तिष्ठदप्यज्ञानमप्रवृत्तिकं क्षीरे नीरवन्निष्प्रभतया साक्षात्कारं न व्याहन्ति। ततः परं तु द्रष्टरि मूलाविद्योन्मूलनाज्जगतो बाधलक्षणनिवृत्तिर्भवतीति श्रुतिशिरःसिद्धान्तः। अयमेव राजयोग उच्यते। तथा च स्मृतिः—

> आगमेनानुमानेन ध्यानाभ्यासरसेन च।
> त्रिधा प्रकल्पयन्प्रज्ञां लभते योगमुत्तमम् ॥ इति।

अस्मिंश्च साक्षात्कारे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षात्कर्तव्यश्चेति श्रुत्या

> श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
> मत्वा च सततं ध्येय एते दर्शनहेतवः ॥

इति स्मृत्या च श्रवणादीनां यद्धेतुत्वाभिधानं तदविद्यावरणनिवृत्तिद्वारेण। प्रतिबन्धकसद्भावे कार्योत्पत्त्यनियमात्। नन्वनाद्यज्ञानवतां सत्यज्ञाने कथं ज्ञानोत्पत्तिस्तयोर्विरोधित्वादिति चेन्न। तुल्यप्रभयैव विरोधिनोरेकत्रसमावेशायोगात्। अत एव तोये तापोत्पत्तिर्दृश्यते। एतदेव ब्रह्मात्मज्ञानं निःश्रेयसस्य

साक्षात्साधनम् । तथा च श्रुतिः—यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते सोऽभयं गतो भवति ।

जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत्प्रकाशते ।
तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥
आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ॥ इति ।

न हि न्यायसांख्योक्तः केवलो विवेकः शान्तिमात्यन्तिकीं जनयितुमर्हति प्रमाणाभावात् । ब्रह्मात्मनोरभेदज्ञानमन्तरेण देहात्मभेदसाक्षात्कारायोगात् । विरोधविरहेण मूलाविद्यानपायाच्च । तथा च श्रुतिः—यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवतीति । किं त्वयं निरुक्तान्वयव्यतिरेकजश्चेत्तार्हि स्वरूपसाक्षात्कारहेतुः । जम्बालजलेक्षणे पङ्कस्येव देहात्मश्लेषस्य तदन्तरायत्वात् ।

यथा मुञ्जादिषीकैवमात्मा युक्त्या समुद्धृतः ।
शरीरत्रितयाद्धीरैः परं ब्रह्मैव जायते ॥ इति श्रुतेश्च ।

तथा च देहाद्भिन्नत्वेन ब्रह्मणा चाभिन्नत्वेनाऽऽत्मनो भानं त्रिविधदुःखात्यन्तनिवृत्तौ हेतुरिति शास्त्रार्थः ॥ ५ ॥

तदानीमात्मनो ब्रह्मण्येकीभावं विशदयति—

## तमोन्तर्धेराभासः प्रभान्तर्दीपवत् ॥ ६ ॥

तम इति । तमोन्तर्धेस्तदानीं ब्रह्मविषयकाविद्यावरणापसरणात् । आभासश्चित्प्रतिबिम्बम् । प्रभान्तर्दीपवत्प्रचण्डातपमध्यवर्तिप्रदीपवत्तिष्ठतीत्यर्थः । तथा चाहं ब्रह्मास्मीतिधीवृत्त्युदयेन तदज्ञानान्तर्धौ चिदाभासो ब्रह्मभास्यत्वेन घटादिवत्तदवभासनानर्हतया प्रचण्डमार्तण्डमण्डलप्रभामध्यवर्तिप्रदीपवत्तदेकीभूयेव वर्तते ॥ ६ ॥

## त्रिपुट्यभानाद्भूमानन्दाभिव्यक्तिः ॥ ७ ॥

त्रिपुटीति । त्रिपुट्यभानात्त्रयाणां पुटानां ज्ञातृज्ञानज्ञेयरूपाणां समाहारस्त्रिपुटी तस्या अभानं प्रतीतिविरहस्तस्माद्भूमानन्दाभिव्यक्तिरपरिच्छिन्नस्वरूपसुखाविर्भावो भवतीत्यर्थः । तथा च त्रिपुट्यन्तर्धानात्सच्चिदानन्दा निरुपाधयः सन्त एकीभूयेवाखण्डाकारेण भासन्ते ॥ ७ ॥

## द्रष्टुरितरानन्दस्तृणवत् ॥ ८ ॥

द्रष्टुरिति । द्रष्टुर्भूमानन्दानुभवितुरितरानन्दो विषयानन्दस्तृणवत्तुच्छत्वेन भासमानः स्यात् । परामृतेन यस्तृप्तः स किं पयः पिपासतीति न्यायादिति

भावः । तदेवं साक्षात्कारेण प्रध्वंसेऽपि मूलाविद्यायाः प्रारब्धक्षयपर्यन्तं चक्रभ्रमिवद्दग्धितापवद्वा तद्विक्षेपशक्तिर्नात्यन्तं प्रलीयते । किंतु तिष्ठन्त्यपि मृतप्राया पूर्ववन्न प्रभवति ॥ ८ ॥

ध्यातुरर्थाप्तिः कीटवत् ॥ ९ ॥

ध्यातुरिति । यद्यपि विचारजन्यज्ञानेनासत्त्वावरणनिवृत्तावप्यभानावरणं न निवर्तते तथाऽपि ध्यातुर्ध्यानशीलस्यार्थाप्तिरभानावरणनिवृत्तिद्वारेण ध्येयप्राप्तिः । कीटवत् । यथा कीटस्तैलपादिर्भ्रमरेणाऽऽक्रान्तः कुलाये समानीतः सततं भयेन भ्रमरमनुचिन्तयन्स्वयं भ्रमर एव भवतीति लोकप्रसिद्धिः । श्रुतिश्च—यो यद्ध्यायति स तदाप्नोतीति । एतेन ध्यानाद्ध्यायिनो लौकिकस्यापि विचित्रफलस्य सिद्धिर्भवितुमर्हतीत्यपि सूचितम् ॥ ९ ॥

ननु विभोरतीन्द्रियस्य कथं दृश्यतेति चेत्तत्राऽऽह—

अत्यक्षोऽपि बभस्ति वृत्तौ तमोवत् ॥ १० ॥

अत्यक्षोऽपीति । अत्यक्षोऽपीन्द्रियातीतोऽपि परात्मा वृत्तौ ब्रह्माकारायां बभस्ति स्वावरणनाशेन प्रकाशते तमोवद्राहुवत् । यद्वददृश्योऽपि राहुश्चन्द्रार्कमण्डलस्थो दृश्यतामेति तद्वदित्यर्थः । ततश्च स्वप्रकाशोऽपि विभुरविद्यावरणेनाऽऽच्छाद्यते तन्नाशे पुनर्दृश्यते घनेनार्कवदित्यवधेयम् ॥ १० ॥

ननु विभोर्बुद्धौ भासमानत्वे "विज्ञातारमरे केन विजानीयात्" "यन्मनसा न मनुते" "निर्विकल्पमनन्तं च हेतुदृष्टान्तवर्जितम् । अप्रमेयमनाद्यं च यज्ज्ञात्वा मुच्यते बुधः" ॥ इत्यादिश्रुतिभिः कथं तस्याप्रमेयत्वाभिधानमित्याह—

अप्रमोक्तिः फलव्याप्तिहानात् ॥ ११ ॥

अप्रमेति । अप्रमोक्तिः प्रमाविषयत्वाभावकथनं फलव्याप्तिहानात्फलस्य बुद्धिस्थचिदाभासस्य व्याप्तिस्तदाकारितासंबन्धस्तस्या हानं विरहस्तस्मादित्यर्थः । तथा च स्वप्रकाशस्य ब्रह्मणो घटादिवदाभासेन व्यापनायोगादप्रमेयत्वोक्तिरिति भावः । एतेनैतदप्यवसीयते—बाह्यज्ञाने घटाद्याकारमापन्नस्यापि चिदाभासस्य विषयादन्यत्वेन भासमानत्वात्प्रमातृत्वादिव्यवहारः । आत्मज्ञाने तु विषयचिदाभासयोरैक्यान्न त्रिपुटीति ॥ ११ ॥

ब्रह्मणि फलव्याप्तिविरहेऽपि तदावरणभङ्गाय वृत्तिव्याप्तिरपेक्षणीयेत्याह—

वृत्तिव्याप्तिरावृतिनुत्तये ॥ १२ ॥

वृत्तिव्याप्तिरिति । आवृतिनुत्तयेऽविद्यावरणशक्तेरपसरणाय वृत्तिव्याप्तिश्चित्तस्य तदाकारितया व्यापनमभ्युपेयेति शेषः । तदुक्तं च—

फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम् ।
ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता ॥
स्वयंप्रकाशरूपत्वादाभासो नोपयुज्यते ॥ इति ।

तथा च ब्रह्माकारवृत्तिर्निदिध्यासनेन दृढतामासाद्याविद्यामुन्मूलयति । ननु ब्रह्मणि वृत्तिव्याप्यताङ्गीकारे तदुपहितचैतन्यस्य ब्रह्माकारावश्यंभावात्फलव्याप्यताऽपि कथं न स्यादिति चेन्न । वृत्तिव्याप्तिकालीनयोर्ब्रह्मचिदाभासयोर्भेदानवभासेन व्याप्यव्यापकताविरहादिति स्वसंवेदनीयम् । ननु च व्याप्येनाज्ञानेन कथं ब्रह्मावरणं संभवति । सत्यम् । बुद्धेरावरणेनैव तदावरणमित्युपचर्यते । दृष्टिं छादयता घनेनार्कोच्छादनवत् । एतेन सदैवान्तरे स्फुरणरूपस्य ब्रह्मणः स्फुरणं न जन्यं जन्या तु तदाकारवृत्तिरेवेति गमितम् ॥ १२ ॥

स्वापे सति संपद्य स्वरसेऽपि नाधिगमः ॥ १३ ॥

स्वाप इति । स्वापे सुषुप्तिकाले सति ब्रह्मणि संपद्यैकीभूय स्वरसेऽप्यज्ञानवृत्त्या स्वरूपसुखानुभवेऽपि नाधिगमोऽहं ब्रह्मेतिभानं न भवति तदानीमज्ञानसद्भावादन्तःकरणवृत्तिविलयाच्चेति भावः । तथा च श्रुतिः—"सति संपद्य न विदुः सति संपद्यामहे" इति। ननु सुषुप्तावज्ञानसद्भावात्कथं ब्रह्मानन्दाविर्भाव इति चेदुच्यते—ज्ञानाज्ञानयोरेव विरोधिता न त्वानन्दाज्ञानयोः । स्वप्नजागरयोस्त्वज्ञानतरङ्गेणैव स्वरूपसुखं न भासते युगपद्व्याहारेण पुत्रध्वनिवत् ॥ १३ ॥

श्रवणादेरन्यस्मात्साधनाद्ब्रह्मसाक्षात्कारेऽपि तेन जीवन्मुक्तिर्नास्तीति दर्शयति—

नान्यस्मात्प्रसंशान्तिर्जीवताम् ॥ १४ ॥

नेति । अन्यस्माच्छ्रवणादेर्भिन्नादविमुक्तप्राणोत्क्रमादिसाधनाज्जीवतां वर्तमानदेहस्थानां प्रसंशान्तिः शोकात्यन्तनिवृत्तिर्जीवन्मुक्तिरिति यावत् ॥१४ ॥

इदानीमात्मसाक्षात्कारे तत्कारणे च प्रतिबन्धकानि दिदर्शयिष्यन्नाह—

श्रोतुमप्यरसा भूयांसः ॥ १५ ॥

श्रोतुमिति । श्रोतुमप्यात्मानमरसा रागरहिता भूयांसोऽनेक एव वर्तन्ते दुरदृष्टसंपर्कादिति भावः । तथा च श्रुतिः—श्रवणायापि बहुभिर्यो न लभ्य इति ॥ १५ ॥

शृण्वन्तोऽपि न विदुः ॥ १६ ॥

शृण्वन्तोऽपीति । शृण्वन्तोऽप्यात्मानं बहव एव नानुभवन्ति । प्रतिबन्धक-

सद्भावादिति भावः। तथा च श्रुतिः—शृण्वन्तोऽपि बहवो यं न विद्युः। स्मृतिश्च—

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः॥ इति॥ १६॥

के ते प्रतिबन्धा इत्यपेक्षायामाह—

**धीमान्द्यं कुतर्करसविपर्ययारब्धभेदास्तदन्तरायाः ॥ १७ ॥**

धीति। धीमान्द्यं बुद्धेरतक्ष्ण्यम्। कुतर्कः शुष्कतर्को यश्च निसर्गजः श्रुतिनिरपेक्षो वा। रसो विषयानुरागः। विपर्ययो देहात्मत्वजगत्सत्यत्वभानम्। आरब्धभेदो जन्मान्तरहेतुभूतं प्रारब्धम्। यश्च भरतवामदेवादौ श्रूयते। तदन्तराया आत्मानुभवे प्रतिबन्धाः॥ १७॥

प्रतिबन्धकापगमोपायमाह—

**त्रयावृत्तेः प्रायस्तदन्तर्धिः स्वसमृद्धिः प्रज्ञाभिव्यक्तिश्च ॥ १८ ॥**

त्रयेति। त्रयावृत्तेः श्रवणमनननिदिध्यासनावर्तनात्प्रायस्तदन्तर्धिर्बाहुल्येनान्तरायस्य विगमः। स्वसमृद्धिरन्तःकरणस्योन्नतिः क्रमशो ब्रह्माभिगतिरित्यर्थः। प्रज्ञाभिव्यक्तिर्ब्रह्मणि पटुताविर्भावः। प्रायःपदेन प्रारब्धस्य नान्तर्धिरिति सूचितम्॥ १८॥

प्रारब्धेतरप्रतिबन्धिनिवृत्तेरुपायान्तरमाह—

**प्रणवजपतदर्थभावने चानन्तराये॥ १९ ॥**

प्रणवेति। प्रणवजपः प्रणवस्य सार्धत्रिमात्रात्मकमन्त्रस्य जपो दीर्घघण्टानिनादवदुच्चारणविशेषः। तदर्थभावनं तदर्थस्य प्रणवप्रतिपाद्यस्य ब्रह्मणो भावनं सर्वत्र चिन्तनम्। ते चानन्तराये न विद्यतेऽन्तरायो याभ्यां ते तथा विघ्नं वारयत इत्यर्थः॥ १९॥

केनाऽऽत्मनो विविदिषोत्पत्तिरिति जिज्ञासायामाह—

**स्वाध्यायाद्यैस्तद्विजिज्ञासा ॥ २० ॥**

स्वेति। स्वाध्यायाद्यैर्वेदाध्ययनादिभिस्तद्विजिज्ञासा, आत्मानं विज्ञातुमिच्छा। आद्यपदेन यज्ञादिपरिग्रहः। तथा च श्रुतिः—तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन चेति। एतेन स्वाध्यायादीनां सत्त्वशुद्धिद्वारेण विविदिषोत्पत्तौ तदुत्पत्त्या च ज्ञानोत्पत्तौ हेतुत्वमभिहितम्॥ २०॥

ब्रह्मजिज्ञासायां कर्मणामादिकारणतां व्यतिरेकमुखेण दर्शयति—

नान्तरुत्प्रवणमनानुश्रविकाणाम् ॥ २१ ॥

नेति । अनानुश्रविकाणां न विद्यत आनुश्रविको वेदोक्तकर्मकलापो नित्यनैमित्तिक इह जन्मनि जन्मान्तरे वाऽनुष्ठितो येषां ते तेषामन्तः, अन्तःकरणमुत्प्रवणं परमात्माभिमुखं न भवतीत्यर्थः । अत एव भगवानाह—

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते । इति ॥

स्मृतिश्च—प्रत्यक्प्रवणतां बुद्धेः कर्माण्युत्पाद्य शुद्धितः ।
कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव ॥
अहिंसयेन्द्रियासङ्गैर्वैदिकैश्चैव कर्मभिः ।
तपसश्चरणैश्चोग्रैः साधयन्तीह तत्पदम् ॥
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥ इति ।

एतेन नित्यनैमित्तिककर्मणां चित्तशुद्धिः फलम् । पितृलोकादिप्राप्तिस्त्ववान्तरमिति बोध्यम् ॥ २१ ॥

एषणावतां कर्मैव मुख्यमिति दर्शयति—

ब्राह्मणमुदग्रमेषणा चेत् ॥ २२ ॥

ब्राह्मणमिति । ब्राह्मणं विधिनिषेधपरो वेदभागः । उदग्रं प्रधानम् । एषणा पुत्रे वित्ते लोके वाऽभिलाषश्चेदित्यर्थः । अत एव श्रुतिः—"पुत्रैषणाया वित्तैषणाया लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति" ॥ इति ।

स्मृतिश्च—परमात्मनि यो रक्तो योऽरक्तोऽपरमात्मनि ।
सर्वैषणाविनिर्मुक्तः स भैक्ष्यं भोक्तुमर्हति "॥ इति ।

एतेन यद्येषणात्रिकाणामेकाऽपि वर्तते तर्हि कर्मानुवर्तितव्यं वशिष्ठादिवदिति सूचितम् ॥ २२ ॥

योगो ज्यायानविद्वन्न्यासात् ॥ २३ ॥

योग इति । योगः फलनिरपेक्षं भगवत्प्रेरणाधिया वा कर्मानुष्ठानम् । अविद्वन्न्यासादज्ञानिनः कर्मपरित्यागात् । ज्यायान्सत्त्वशुद्धिद्वारा झटित्येव ब्रह्मप्राप्तिकरत्वादिति भावः । अत एव स्मृतिः—

संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।
योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ इति

एतदुक्तं भवति—विविदिषासंन्यासापेक्षया कर्मयोग एव श्रेयान्कर्मसंन्यासविधेश्चित्तविक्षेपकर्मत्यागाभिप्रायकत्वात् । भक्तिवर्त्मनि तत्त्यागोपदेशस्तु फलाभिसंधानपूर्वककर्मवर्जनपरो भक्तिश्लाघनपरो वा ॥ २३ ॥

कर्मन्यासस्य विदुषि विकल्पमाह—

**विद्वांस्तु न्यसेत्तैर्वा जिजीविषेत् ॥ २४ ॥**

विद्वांस्त्विति । तुः पूर्ववैलक्षण्यद्योतकः । विद्वान्कृतात्मसाक्षात्कारो न्यसेत्कर्माणि त्यजेत् । तत्र प्रयोजनधीविरहादिति भावः । तथा च श्रुतिः—किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामह इति । स चेत्प्रारब्धवशाद्गृही तर्हि तैः कर्मभिर्नित्यनैमित्तिकैर्जिजीविषेज्जीवितुमिच्छेत्कालं गमयेदिति भावः । तथा च श्रुतिः—कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा इति । वाशब्दः पक्षान्तरं सूचयति । एतेन गृहस्थानां कृतात्मसाक्षात्काराणामपि कर्माणि वैदिकानि नित्यनैमित्तिकानि लोकसंग्रहार्थं तदभ्युदयार्थं च कायवाङ्मनोभिः कर्तव्यानि वशिष्ठजनकादिवन्न तु त्यक्तव्यानि शुकनारदादिवदिति सूचितम् । योगिनां पुनरविदुषामपि नितरामेव सर्वकर्मन्यासः । ब्रह्मचर्यं समाप्य गृही भवेद्गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेदिति क्रमप्राप्तस्तु न्यासो ब्राह्मणस्यैव । यदहरेव विरजेत्तदहरेव प्रव्रजेदिति वैराग्यहेतुकोऽपि तस्यैव मुख्यः । ब्राह्मणो निर्वेदमायादित्यत्र तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणाया वित्तैषणाया लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्तीत्यत्र च श्रुतौ ब्राह्मणपदश्रवणादिति मन्तव्यम् ॥ २४ ॥

कर्मभ्यो लोकाभ्युदयं दर्शयति—

**तेभ्यः प्रीयन्ते दिव्या भुवोऽप्यभ्युदयः ॥ २५ ॥**

तेभ्य इति । तेभ्यः कर्मभ्यो दिव्या इन्द्रादयः प्रीयन्ते प्रीतिं यान्ति । भुवः कर्मभूमेरभ्युदयोऽपि तत्प्रीत्येत्यर्थः । अत एवोक्तम्—

अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ।
इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः ॥
देवान्भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ इति ।

अत्र वैधकर्मणां कर्मभूमेरेवानुकूलत्वाद्भोगभूमौ तदकरणेऽपि न क्षतिरिति सूचितम् ॥ २५ ॥

लोकापचारात्पुनरशुभं दर्शयति—

प्रत्यूहन्तेऽपचारात् ॥ २६ ॥

प्रत्यूहन्त इति । अपचाराद्वेदविरुद्धाचरणात् । प्रत्यूहन्त उपद्रवन्ति । दिव्या इत्यर्थः । तदुक्तम्—

अतिलोभादसत्त्वाद्वा नास्तिक्याद्वाऽप्यधर्मतः ।
नरापचारान्नियतमुपसर्गः प्रवर्तते ॥
अतोऽपचारान्नियतमपवर्जन्ति देवताः ।
ताः सृजन्त्यद्भुतांस्तावद्दिव्यनाभसभूमिजान् ॥ इति ।

एतेन देवादीनामृणापनयनमपि कार्यमिति सूचितम् । तथा चोक्तम्—

देवानां च पितॄणां च ऋषीणां च तथा नरः ।
ऋणत्राञ्जायते यस्मात्तस्मान्मोक्षे यतेत्सदा ॥
देवानामनृणो जन्तुर्यज्ञैर्भवति नारद ।
अल्पवित्तस्तु पूजाभिरुपवासव्रतैस्तथा ॥
श्राद्धेन प्रजया वाऽपि पितॄणामनृणो भवेत् ।
ऋषीणां ब्रह्मचर्येण श्रुतेन तपसा तथा ॥ इति ॥ २६ ॥

त्रसन्त्युत्पातास्तपसोऽसाध्यसाध्यत्वात् ॥ २७ ॥

त्रसन्तीति । तपसो वैधकृच्छ्रात्कुतोऽसाध्यसाध्यत्वात् । असाध्यं लोकैः साधयितुमशक्यं यत्तदपि साध्यं यस्मात्तस्य तथात्वादुत्पाता रोगाद्युपसर्गनिचयास्त्रसन्ति शरीरशोषकृद्वैधोपवासादिभ्यो बिभ्यतीत्यर्थः । तपःप्रभावमाह पुराणम्—

तपोभिः प्राप्यतेऽभीष्टं नासाध्यं हि तपस्यतः ।
दुर्भगत्वं वृथा लोको वहते सति साधने ॥

अत एवास्यां कर्मभूमौ कर्मैव तत्रत्यानामिहामुत्र च क्षेमंकरमिति मनस्विनां हृद्यम् ॥ २७ ॥

श्रौताच्छं ग्रहचारवत् ॥ २८ ॥

श्रौतादिति । श्रौताच्छास्त्रविधेरनुष्ठीयमानाच्छमभ्युदयो ग्रहचारवद्ग्रहाणां भ्रमिभिर्लक्ष्यमाणप्रत्यग्गतीनां प्राच्यगतिरिवालक्ष्यमित्यर्थः । तथा च नैसर्गिकबहिःप्रवणगतीनामिन्द्रियाणां प्रत्यावर्तनमात्मनीनं विध्याचरणमूलकमिति तदनुसरणं साधीयः ॥ २८ ॥

**निष्ठा त्रयी त्रिकाण्डोपदेशात् ॥ २९ ॥**

निष्ठेति। निष्ठा श्रद्धा त्रयी त्रिप्रकारा त्रिकाण्डोपदेशात्। त्रयाणां कर्मोपासनाज्ञानानां यथाक्रमं कर्मेन्द्रियमनोबुद्धिव्यापाराणां काण्डः प्रस्तावस्तदुपदेशात्। वेदेष्विति शेषः। तदुक्तम्—कर्मोपास्तिस्तथा ज्ञानमिति त्रिकाण्डिका श्रुतिरिति। तत्राधिकारितारतम्यात्काण्डत्रयमुपदिष्टमिति रहस्यम्। यत्तु त्रिकाण्डानां परस्परस्य परस्परेण निन्दाभिधानं तत्तदधिकारिणां स्वस्वकाण्डे संस्थापनार्थमेव। परमार्थस्तु पूर्वस्य परं प्रति हेतुत्वमिति ॥ २९ ॥

कस्य कुत्र निष्ठेत्याह—

**त्रयाणां त्रिषु ॥ ३० ॥**

**इति चतुर्थे ज्ञानपाठे द्वितीयः प्रपाठः।**

---

त्रयाणामिति। त्रयाणां कर्मोपास्तिज्ञानबीजिनां त्रिषु कर्मोपास्तिज्ञानेषु निष्ठा क्रमादुदेतीत्यर्थः। तथा च कर्मादिबीजिनां त्रयाणां यथाक्रमं कर्मभक्तिज्ञानमार्गेषु निष्ठा स्वत एव प्रतिभातीति न कश्चिद्विसंवादः। तत्र च कर्मिणो द्वैतार्थेन भक्ता विशिष्टाद्वैतार्थेन ज्ञानिनस्त्वद्वैतार्थेन चरन्तीति ॥३०॥

इति चतुर्थे ज्ञानपाठे द्वितीयः प्रपाठः ॥ २ ॥

---

अथ चतुर्थे ज्ञानपाठे तृतीयः प्रपाठः।

---

ब्रह्मविचारं विस्तरेणाभिधाय तत्र कस्याधिकारितेति विज्ञापयन्नाह—

**ब्रह्माध्वोपात्तसाधनस्य ॥ १ ॥**

ब्रह्मेति। ब्रह्माध्वा ब्रह्मविचारः। उपात्तसाधनस्योपात्तं लब्धं साधनं नित्यानित्यवस्तुविवेकेहामुत्रफलभोगविरागशमादिषट्कसंपत्तिमुमुक्षा इत्येवंरूपं येन स तस्य। तस्मिंस्तदधिकार इति भावः। अत एव श्रुतिः—शान्तो दान्त उपरतास्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्यति। स्मृतिश्च—

वैराग्यपवनाकीर्णे विवेककुसुमाकरे।
पीयूषं वमति श्रोत्रे वेदान्तकोकिलध्वनिः ॥ इति।

एतेन श्रवणादौ साधनचतुष्टयस्यान्तरङ्गसाधनत्वमभिहितम् ॥ १ ॥

ननु साधनचतुष्टयसंपन्नस्याधिकारितोक्तेरन्यस्य ब्रह्मविचारः कर्तव्यो न वेत्याशङ्कायामाह—

नान्यस्यापि पण्डः ॥ २ ॥

नेति । अन्यस्यापि साधनसंपत्तिरहितस्यापि । पण्डः फलजननशक्तिरहितो ब्रह्माध्वा नेत्यन्वयः । फलं च—

दिने दिने तु वेदान्तविचाराद्भक्तिसंयुतात् ।
गुरुशुश्रूषया लब्धात्कृच्छ्राशीतिफलं लभेत् ॥
स्नातं तेन समस्ततीर्थसलिले दत्ताऽपि सर्वाऽवनि-
र्यज्ञानां च कृतं सहस्रमखिला देवाश्च संपूजिताः ।
संसाराच्च समुद्धृताः स्वपितरस्त्रैलोक्यपूज्योऽप्यसौ
यस्य ब्रह्मविचारणे क्षणमपि स्थैर्यं मनः प्राप्नुयात् ॥

इत्यागमोक्तम् । अपि च युगान्तरानुष्ठितपूर्ववेदोदितक्रियाकलापामलमानसानां कलावनुजानामैहिककर्माचरणं विनाऽपि श्रवणाद्यावर्तनेनैव प्रत्यूहापायपुरःसरसाधनोदयसंभवादात्मसाक्षात्कारो भवितुमर्हतीति गृहमेधिनामपि तदालोच्यमेव ॥ २ ॥

विचारनिष्ठस्य विद्याप्तेरवश्यं भावं दर्शयति—

तन्निष्ठस्य विद्याप्तिरिहामुत्र वा ॥ ३ ॥

तदिति । तन्निष्ठस्य ब्रह्मविचारे निरतस्य । विद्याप्तिरात्मसाक्षात्कारस्य प्राप्तिरिहास्मिञ्जन्मनि, अमुत्र परजन्मनि प्रत्यूहसद्भावेऽमुत्रेति वाशब्दः सूचयति ॥ ३ ॥

ब्रह्मानुरतेर्ब्राह्मणानां नैसर्गिकत्वमाह—

ब्राह्मी निष्ठाऽऽत्मनो मुखजानाम् ॥ ४ ॥

ब्राह्मीति । ब्राह्मी ब्रह्मविषया निष्ठाऽऽत्मनः स्वतः । मुखजानां ब्राह्मणानाम् । एतेन ब्रह्मविचारविमुखानां ब्रह्मकुलोत्पन्नानां केवलं जातिब्राह्मण्यमेवेति प्रतिपत्तव्यम् ॥ ४ ॥

विद्याविपाकं विना नाविद्योच्छित्तिरिति दर्शयति—

न विद्याऽनृद्धेष्टे मोहिन्याः ॥ ५ ॥

नेति । विद्या, आत्मविषयिणी । अनृद्धा दुर्बला । मोहिन्या अविद्यायाः कर्मणा दृढतामाप्तायाः । नेष्टे तामुत्पाटयितुं न शक्नोतीत्यर्थः ॥ ५ ॥

## बाढोद्दूयते कर्मैधांसि ॥ ६ ॥

बाढेति। बाढा दृढा। कर्मैधांसि शुभाशुभकर्मेन्धनानि। उद्दूयते दह्तीत्यर्थः। तथा च श्रुतिः—तद्यथेषीका तूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे। स्मृतिश्च—ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथेति। दाहश्च मूलाज्ञाननाशेनैव न तु साक्षात् कर्मज्ञानयोर्विरोधाभावादिति भावः। अत्र कर्मपदं संचितपरं क्रियमाणस्य स्वरूपावलोकिनि ज्ञानिन्यश्लेषात्। प्रारब्धस्य च भोगेनैव नाश्यत्वात्। तथा च श्रूयते—यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं न श्लिष्यते। तस्य तावदेव चिरं यावन्न विमोक्ष्य इति। वस्तुतस्तु प्रारब्धस्यापि बाधलक्षणो नाशो युक्तस्तस्यापि द्वितीयत्वेन ज्ञानिनि सत्यत्वभानविरहात्। श्रुतिस्तु तदज्ञानिबोधार्थं बाह्यदृष्ट्यैवावदत्। इति न कश्चिद्विसंवादः। एवं च सति प्रदर्शितायां श्रुतौ कर्माणीति बहुत्वस्य स्मृतौ च सर्वशब्दस्याप्यसंकोचः ॥ ६ ॥

## नानियुध्यर्द्धा मल्लवत् ॥ ७ ॥

नेति। मल्लवद्विद्याऽनियुध्याविद्यया सह नियुद्धमकृत्वा, ऋद्धा वीर्यवती न भवतीत्यर्थः। एतदुक्तं भवति—यथा युयुधानयोः पराक्रान्तेन मल्लेनाभिभूतोऽपि नीचस्थो जिगीषया व्यायाम्यमाणः शनैः शनैः स्ववीर्योज्जृम्भणाज्जातूपरिस्थं वारमेकमभिभवति पुनरभिभूयते च। एवं द्वित्रिश्चतुरादिक्रमेण परिपुष्य समये सदैवोपरि विराजति। विद्ययाऽपि तद्वदविद्याविजयक्रमः॥७॥

## व्युत्पादकृदावृत्तिरसकृत् ॥ ८ ॥

व्युत्पादकृदिति । व्युत्पादकृद्विशिष्टसंस्कारोत्पादिका । आवृत्तिरभ्यसनं विद्याया असकृत्पुनःपुनः। अत एवोक्तम्—

> वैराग्यमात्मपार्थक्यमहं ब्रह्मेति वेदनम् ।
> सर्वं ब्रह्मैव मिथ्येदं सर्वदैवं समभ्यसेत् ॥ इति ॥ ८ ॥

संप्रति विद्यायाः काले परिपाकं सदृष्टान्तमाह—

## दिष्टे विपाकः कृषिगर्भवत् ॥ ९ ॥

दिष्ट इति। दिष्टे समयविशेषे। विपाको दृढता। कृषिगर्भवद्यथा शरदादौ जातस्य धान्यादेर्गर्भस्य हेमन्तादौ परिपाकस्तद्वदित्यर्थः ॥ ९ ॥

तस्या विपाकावस्थामाह—

क्षेत्रवत्तज्ज्ञे शेषः ॥ १० ॥

क्षेत्रवदिति । क्षेत्रवद्देहवत् । तज्ज्ञे क्षेत्रज्ञे परमात्मनि, शेषः समाप्तिः । यथा देहे संशयविपर्ययशून्यात्मत्वमज्ञानिनां भासते तद्वत्परमात्मन्यात्मत्वे भासमाने समाप्तिर्विद्याया इत्यर्थः । यावन्नायं विपाकस्तावन्निदिध्यासनं मननं चापेक्षणीयम् । एतदुक्तं भवति—जगज्जीवब्रह्मतत्त्वस्य साक्षात्कृतस्य स्मृतिप्राबल्यावस्थायामेव जीवन्मुक्तिरिति ॥ १० ॥

साक्षात्कारेऽप्यात्मनो मिथ्यासंस्कारस्यानादिकालमारभ्य मनसि विराजमानस्य सहसा निवृत्तिर्न स्यादिति तदुपायमाह—

चिरनिरन्तरसत्काराभ्यर्चनादुच्छित्तिर्वासनानाम् ॥ ११ ॥

चिरेति । चिरं दीर्घकालो मासवत्सरादिः । निरन्तरमविच्छेदः । सत्कारः समादरः । तैर्यदभ्यर्चनमभ्यसनं तस्मात् । वासनानां कर्ताऽहं भोक्ताऽहमित्यादिमिथ्यासंस्काराणां दीर्घकालमारभ्य संचितानाम् । उच्छित्तिरन्तर्धानमित्यर्थः ॥ ११ ॥

स्थितप्रज्ञं ब्रह्मैवाऽऽहुः ॥ १२ ॥

स्थितेति । स्थितप्रज्ञं स्थिता निश्चला प्रज्ञा ब्रह्मात्मैक्यविषया यस्य स तं ब्रह्मैवाऽऽहुः कवयो न तु ब्रह्मज्ञमिति एवकारार्थः ॥ १२ ॥

तदारब्धं च मरीचीवत् ॥ १३ ॥

## क्षेत्रवत्तज्ज्ञे शेषः ॥ १० ॥

क्षेत्रवदिति । क्षेत्रवद्देहवत् । तज्ज्ञे क्षेत्रज्ञे परमात्मनि, शेषः समाप्तिः । यथा देहे संशयविपर्ययशून्यात्मत्वमज्ञानिनां भासते तद्वत्परमात्मन्यात्मत्वे भासमाने समाप्तिर्विद्याया इत्यर्थः । यावन्नायं विपाकस्तावन्निदिध्यासनं मननं चापेक्षणीयम् । एतदुक्तं भवति—जगज्जीवब्रह्मतत्त्वस्य साक्षात्कृतस्य स्मृतिप्राबल्यावस्थायामेव जीवन्मुक्तिरिति ॥ १० ॥

साक्षात्कारेऽप्यात्मनो मिथ्यासंस्कारस्यानादिकालमारभ्य मनसि विराजमानस्य सहसा निवृत्तिर्न स्यादिति तदुपायमाह—

## चिरनिरन्तरसत्काराभ्यर्चनादुच्छित्तिर्वासनानाम् ॥ ११ ॥

चिरेति । चिरं दीर्घकालो मासवत्सरादिः । निरन्तरमविच्छेदः । सत्कारः समादरः । तैर्यदभ्यर्चनमभ्यसनं तस्मात् । वासनानां कर्ताऽहं भोक्ताऽहमित्यादिमिथ्यासंस्काराणां दीर्घकालमारभ्य संचितानाम् । उच्छित्तिरन्तर्धानमित्यर्थः ॥ ११ ॥

## स्थितप्रज्ञं ब्रह्मैवाऽऽहुः ॥ १२ ॥

स्थितेति । स्थितप्रज्ञं स्थिता निश्चला प्रज्ञा ब्रह्मात्मैक्यविषया यस्य स तं ब्रह्मैवाऽऽहुः कवयो न तु ब्रह्मज्ञमिति एवकारार्थः ॥ १२ ॥

## तदारब्धं च मरीचीवत् ॥ १३ ॥

तदेति । तदा प्रज्ञास्थैर्ये । आरब्धं च फलदानाय प्रवृत्तं यत्कर्म तदपि मरीचीवत् । मृगतृष्णेव मृषेत्यर्थः ॥ १३ ॥

निश्चितार्थस्य साक्षात्कारविरहेऽपि संसृतेः शैथिल्यमाह—

## न मानेनाधिगतार्थस्य संसृतिः प्राग्वत् ॥ १४ ॥

नेति । मानेन तत्त्वमस्यादिना प्रमाणेनाधिगतार्थस्याधिगतो निश्चितोऽर्थो ब्रह्मात्मैक्यरूपो येन स तस्य । प्राग्वद्वेदान्तार्थानालोचनदशायामिव संसृतिर्नेत्यन्वयः । तदर्थनिश्चयेन कर्तृत्वाभिमानशैथिल्यादिति भावः ॥ १४ ॥

तस्य च ब्रह्मलोके साक्षात्कारान्मुक्तिरिति सूचयति—

## संपद्यते च प्रेत्य परान्ते ॥ १५ ॥

समिति । संपद्यते ब्रह्मैव भवति प्रेत्य परलोके परान्ते हिरण्यगर्भावसाने । तथा च श्रुतिः—वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोके च परान्तकाले परामृताः परिमुच्यन्ति सर्वे ॥ इति ॥ १५ ॥

स्वो ह्यात्मनः सखाऽसखा वा ॥ १६ ॥

स्व इति। यो जीवो यथोक्तकारी स एव स्वयं स्वीयो बन्धुः । अन्यस्तु स्वयमेव स्वरिपुरित्यर्थः। उक्तं हि भगवता—

आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः।
बन्धुरात्माऽऽत्मनस्तस्य येनैवाऽऽत्माऽऽत्मना जितः ॥ इति ॥ १६ ॥

सत्त्वगुण एवाऽऽत्मनो बन्धुत्वे हेतुरिति दर्शयन्नाह—

स्वमवदातमभिप्लवते ॥ १७ ॥

स्वमिति। स्वमात्मानमवदातं सत्त्वमभिप्लवतेऽभिगच्छति। तमोरजोवृत्तिभिरात्मनो देहेष्वात्मधीः सत्त्ववृत्तिभिराभासे शुद्धसत्त्ववृत्त्या तु ब्रह्मणीति सिद्धान्तितत्वादिति भावः ॥ १७ ॥

शोध्यं निदानं मनोऽशनशुद्धिवैराग्याभ्यासेभ्यः ॥ १८ ॥

शोध्यमिति। निदानं सुखदुःखज्ञानाज्ञानादिजगद्बीजम् । मनः शोध्यं शोधनीयम् । उन्मार्गान्निवर्तनीयमित्यर्थः । केभ्योऽशनशुद्ध्यादिभ्यः। अत्राशनशुद्धिर्निषिद्धान्नवर्जनम्। वैराग्यमुक्तम् । अभ्यासश्चित्तस्यैकस्मिन्नालम्बने पुनः पुनः स्थापनम्। तथा चाशनशुद्ध्यादीनां मनःशुद्धिहेतुत्वात्तत्र शुभार्थिभिर्यतितव्यम् ॥ १८ ॥

परोक्षिणोऽपि क्षेमैकानुध्या ॥ १९ ॥

परोक्षिण इति । परोक्षिणोऽपि साक्षात्कारमकुर्वतोऽपि। एकानुध्या ब्रह्मैकचिन्तनं क्षेमेत्यर्थः। तदनुध्याप्रकारो यथा पूर्वोक्तरीत्या घटादीन्यहंकारान्तानि प्रकृतितो नातिरिक्तानि तेषां साक्षात्परम्परया च तत्परिणामरूपत्वात्। प्रकृतेरपि सत्प्रतिभासरूपाया ब्रह्मणः पृथक्सत्ताविरहान्मुखप्रतिबिम्बवदित्येकं ब्रह्मैव तात्त्विकमस्ति सर्वमन्यन्मायाविजृम्भितमिति वेदान्तसिद्धान्तः ॥ १९ ॥

विदामप्यर्थो वाचि वाव दुर्नियतीनाम् ॥ २० ॥

इति चतुर्थे ज्ञानपाठे तृतीयः प्रपाठः ॥

---

विदामिति। विदां शास्त्रार्थाभिज्ञानाम्। दुर्नियतीनां दुर्दैवानाम्। अर्थः शास्त्रवेद्यः। वाचि वाव वचस्येव विराजति न तु मनसीति भावः। कि-

वक्तव्यं शास्त्रानभिज्ञानामित्यपेरर्थः । बहुवचनेन दुर्नियतिरनेकेषामेवास्तीति सूचितम् ॥ २० ॥

इति चतुर्थे ज्ञानपाठे तृतीयः प्रपाठः ॥ ३ ॥

---

अथ चतुर्थे ज्ञानपाठे चतुर्थः प्रपाठः ।

---

संप्रति स्वावरणोन्मूलनेन प्राप्तस्यैव ब्रह्मणः पुनः प्राप्तिरिति दर्शयति—

**स्वावृत्त्यपाये प्राप्तस्यैवान्वाप्तिर्दशमवत् ॥ १ ॥**

स्वेति । स्वावृत्त्यपाये स्वस्मिन्नात्मनि यदावरणमविद्याशक्तिविशेषो येन स्वरूपमाच्छाद्य कर्तृत्वादिरारोप्यते तस्या अपाये विनाशे सति प्राप्तस्यैव ब्रह्मणोऽन्वाप्तिः पुनः प्राप्तिरित्यर्थः । ननु प्राप्तस्य पुनः प्राप्तिः कीदृशीति चेदाह--दशमवदिति । तथा हि—किल केचन दश पुरुषाः सरित्संतरणेन परपारमुत्तीर्य सर्व एव वयमुत्तीर्णा न वेति वितर्कयन्तः स्वं स्वं विहाय गणनाद्दशमो नद्यां ममारेति निश्चित्य विलपन्तः केनचिदाप्तपुरुषेण भ्रान्तिहेतुं विजानता दशमोऽस्तीत्युक्ताः पुनस्तथैव नवमान्तं गणयन्तो दशमस्त्वमेवेति प्रदर्शिताः । तथा च यथा दशमस्याऽऽदौ तस्मिन्नज्ञानं ततो दशमो नास्ति न भातीत्यावरणं ततः शोकादिरिति विक्षेपस्तत आप्तोपदेशाद्दशमोऽस्तीति परोक्षज्ञानं ततः स्वेन सह गणनादहमेव दशम इत्यपरोक्षज्ञानं ततः शोकादिनिवृत्तिस्ततस्तृप्तिरिति सप्तावस्थाः । तथा जीवस्याऽऽदौ ब्रह्मण्यज्ञानं ततस्तन्नास्ति न भातीत्यावरणम् । ततो देहादिमानहमिति विक्षेपः । ततो यतो वा इमानीत्याद्याप्तोपदेशाद्ब्रह्मास्तीति परोक्षज्ञानम् । ततस्तत्त्वमस्यादिमहावाक्यार्थविचारात्तद्ब्रह्मैवाहमित्यपरोक्षज्ञानम् । ततो देहाध्यासनिवृत्तिः । ततो निरङ्कुशतृप्तिरित्यवधेयम् । तथा हि श्रुतिः—ब्रह्मैव सन्ब्रह्माप्येति ।

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वा मुक्त इत्येषा परमार्थता ॥ इति ।

एतदुक्तं भवति—ब्रह्मविषयकाविद्याविगमे तत्प्राप्तिरुपचर्यते ग्रैवेयवत् । एतेन ब्रह्मविदाप्नोति परमित्यादिश्रुतयोऽपि न विरुध्यन्ते ॥ १ ॥

ब्रह्मविदोऽवस्थाद्वयमाह—

**वृत्त्युन्मेषान्तर्धी जागरसुप्ती संवेदिनः ॥ २ ॥**

वृत्तीति । वृत्त्युन्मेषान्तर्धी वृत्तेर्ब्रह्माकारायाः स्फुरणान्तर्धाने यथाक्रमं

जागरसुप्ती । कस्य संवेदिनः कृतात्मसाक्षात्कारस्य ॥ २ ॥

जीवन्मुक्तस्य लक्षणं वर्णयन्नाह—

## निरोधान्ययोश्चिद्विविक्तयोश्चैत्यम् ॥ ३ ॥

निरोधेति । निरोधान्ययोः समाधिव्युत्थानकालीनयोश्चिद्विविक्तयोः कूटस्थचैतन्यतत्पृथक्कृताभासयोः क्रमाच्चैत्यमात्मत्वं संवेदिन इत्यर्थः । तथा च विदुषां व्यवहारे द्वैतभानेऽप्यद्वैतं वस्तु भासते मृन्मयगजादिभाने मृद्भानवदिति मिश्रात्मभानम् । समाधौ तु द्वैताप्रतीतेः केवलात्मभानमेव बोध्यम्॥ ३॥

किंच—

## निर्वासनाचारः ॥ ४ ॥

निरिति । निर्गता वासना यस्मात्तादृगाचार इत्यर्थः । तथा च—आत्मदर्शिनः सुखदुःखाद्याभासानुभवेनैव व्यवहारः । तथा हि श्रूयते—दुःखेनात्यन्तविमुक्तश्चरतीति । तथा च ज्ञानयोगिनः समाधौ ब्रह्मात्मनैवावस्थानम् । व्युत्थाने तु प्रारब्धक्षयपर्यन्तं बाधितानुवृत्त्याऽऽचरणमिति भावः । प्रारब्धभोगे तु न तस्योद्वेगः कार्यः । यथाऽऽहुरभियुक्ताः—

श्रुत्वोपनिषदामर्थं विज्ञाय तत्त्वमात्मनः ।
प्रारब्धमखिलं भुञ्जन्नार्हत्युद्वेजितुं सुधीः ॥ इति ॥ ४॥

किंच—

## साक्षोऽप्यनक्षः ॥ ५ ॥

साक्षोऽपीति । साक्षोऽपि सहेन्द्रियैर्वर्तमानोऽपि अनक्ष इन्द्रियशून्यः । स्वरूपस्मरणेन तद्व्यापारैरलिप्तत्वादिति भावः । तथा च श्रुतिः—सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव समना अमना इव ध्यायतीव लेलायतीवेति । एतेन समाहितोऽप्यात्मविद्व्यवहर्तुमर्हति गतिमानिव ध्यायन्निति बोध्यम् ॥ ५ ॥

किंच—

## संसरन्नप्युन्निद्राति शश्वत् ॥ ६ ॥

समिति । संसरन्नपि कर्ताऽहं भोक्ताऽहमित्यादि व्यवहरन्नपि शश्वत्सततमुन्निद्राति चेतति दर्पणस्थमुखबिम्बवत्स्वस्वरूपस्य विलोकितत्वादिति भावः ॥ ६ ॥

किंच—

## सारिवदर्चिः ॥ ७ ॥

सारिवदिति । सारिवत्संसारतरुवदर्चिरन्तरेव ज्योतिःसत्त्वप्रकर्षादिति भावः ॥ ७ ॥

तस्मिन्नेव नरजन्मनः शैषिकी पञ्चफली प्रतिभातीत्याह—

तत्रार्थाः शैषाः ॥ ८ ॥

तत्रेति । शेषे भवाः शैषाः । अर्थाः प्रयोजनानि ज्ञातज्ञेयताकृतकृत्यताप्राप्तप्राप्यतात्रिविधदुखात्यन्तनिवृत्तिपरमानन्दाभिव्यक्तिरूपाणि विराजन्तीत्यर्थः ॥ ८ ॥

स्वतःप्रोद्भवादमानाद्यं साधनमितरेषाम् ॥ ९ ॥

स्वत इति । स्वतः प्रयत्नानपेक्षतयैव प्रोद्भवात्प्रकर्षेणोद्भवात् । अमानाद्यममानित्वमदाम्भित्वमित्यादिधर्मजातम् । इतरेषामज्ञानिनां साधनं ज्ञानोपकरणम् । अत एवोक्तम्—

उत्पन्नात्मावबोधस्य ह्यद्वेष्टृत्वादयो गुणाः ।
भवन्त्ययत्नतस्तस्य न तु साधनरूपिणः ॥ इति ।

एतेन ज्ञानिनां नैसर्गिकधर्मजातमज्ञानिनां ज्ञानसाधनमिति सूचितम् ॥९ ॥

तद्भावाभ्युदयः ॥ १० ॥

तदिति । तद्भाव तस्मादेव जीवन्मुक्तपुरुषादभ्युदयो वस्तुतो मङ्गलमुदेति । नान्यस्मादित्यर्थः ॥ १० ॥

निरावृतेर्ह्याम्नायोऽनर्थापनुत् ॥ ११ ॥

निरिति । निरावृतेरविद्यावरणशून्यस्याऽऽम्नाय उपदेशोऽनर्थापनुदनर्थमपनुदतीत्यर्थः । हिशब्देनान्येभ्यो यदनर्थापनोदनं तत्तदाभास एवेति सूचितम् ॥ ११ ॥

काकाक्षिवत्कृतिर्लोकेभ्यः ॥ १२ ॥

काकेति । काकाक्षिवद्यथा काकचक्षुषः क्रमादुभयस्मिन्नेत्रयन्त्रे गतिस्तद्वत्कृतिः प्रारब्धजः प्रयत्नः प्रतिभातीति शेषः । केभ्यो लोकेभ्यो लोकान्संग्रहीतुं लोकानामुन्मार्गनिवृत्तय इत्यर्थः । अत एव श्रुतिः—तस्य तावदेव चिरं यावन्न विमोक्ष्ये । स्मृतिश्च—

नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥ इति ।

किं तु बलवदपि प्रारब्धं ब्रह्मात्मनाऽवस्थितौ न प्रभवति । तस्मादपि योगस्य बलीयस्त्वात् । तदानीमिन्द्रियार्थाप्रतीतेश्च । काकाक्षिवदित्यनेन ज्ञाननिष्ठस्य ज्ञानक्रीडे युगपदिव व्यवहारे प्रतिभासेते तत्क्षणयोरतीव सूक्ष्मत्वेन भेदानुपल-

ब्धेरिति सूचितम् । तथा च लब्धधीरेवोभयजगत्तत्त्वज्ञत्वादिह जगति लौकि-काध्यात्मोभयानन्दौ भुङ्क्त इत्यवधेयम् । एवं च दृष्टात्मनां व्यवहारवेलायां लोकसंग्रहाय परजीवभेदोपास्योपासकभावादिरपीति वेदान्तराद्धान्तः ॥ १२ ॥

तस्येह कियती स्थितिरित्याह—

**स्थितिराधिकारादाधिकारिकाणाम् ॥ १३ ॥**

स्थितिरिति । आधिकारिकाणामधिकारेषु लोकस्थितिहेतुषु वेदप्रवर्तना-दिषु नियुक्तानां ब्रह्मादीनां कृतात्मसाक्षात्काराणामाधिकाराद्वेदप्रवर्तनाद्य-धिकारपर्यन्तं स्थितिरित्यर्थः । तथा च वशिष्ठादीनां मानसपुत्राणां ब्रह्मवि-दामपि स्वाधिकारसंपादनार्थं देहान्तरोत्पत्तिरपि बहुधा स्मर्यते । तत्र च केचित्पतिते पूर्वदेहे देहान्तरमाददते । केचिच्च स्थित एव तस्मिन्योगैश्वर्यबला-दनेककायानभ्युपगच्छन्ति । तेषां स्थितेराधिकारसमयतन्त्रत्वादिति सर्वं सुस्थम् ॥ १३ ॥

तत्त्वविदां प्राणादेरात्यन्तिकलयमाह—

**प्राणकलाः परस्मिन्नस्तमियुराम्नायात् ॥ १४ ॥**

प्राणेति । प्राणाः पञ्च कलास्तु षोडश । यथेन्द्रियाण्येकादश पञ्च तन्मा-त्राणि च ताः परस्मिन्ब्रह्मण्यस्तं लयमियुः प्राप्नुयुः । कुत आम्नायाच्छ्रु-त्युपदेशात् । तथा हि श्रुतिः—न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते, एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्तीति । एतदुक्तं भवति—विदुषां सोपाधिभ्रमवतां प्रारब्धावसाने लिङ्गदेहघटकस्य तत्तद्गुणानां तादृशसंश्लेषस्योच्छेदात्तद्भ्रान्तिरपि निवर्तते ॥ १४ ॥

प्रागुत्तमाधिकारिणां ब्रह्मप्राप्तेरुपायमभिधाय पुनर्मध्यमाधिकारिणामपरं दर्शयन्नाह—

**सनदुपासीरन्नन्ये ॥ १५ ॥**

सनदिति । अन्ये विचारविकलाः सनन्निरन्तरमुपासीरन्सगुणं निर्गुणं वा ब्रह्म भावयेयुः । तत्र निर्गुणं स्वगतादिभेदत्रयशून्यं सच्चिदानन्दरूपं गुरुमुखा-न्निश्चित्य सोऽहमित्यभेदेन भावयेयुः । तदुक्तं भगवता—

> अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
> तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ इति ॥

सगुणं तु स्वगतभेदविशिष्टं सजातीयविजातीयभेदशून्यं स्वस्माद्भिन्नं विश्वरूपेण चतुर्भुजादिरूपेण वा चिन्तयेयुः ॥ १५ ॥

ननूपासकाः कियन्तं[कालं]ध्यानमावर्तयेयुरित्याह—

तदाप्रायात्फलं हि शेषक्रतुवत् ॥ १६ ॥

तदिति। तदुपासनमाप्रायादामरणादावर्तयेयुरित्यर्थः। तत्र हेतुः—फलमिति। हि यतः फलं पारलौकिकं शेषक्रतुवदन्तिमध्यानवत्। अन्तिमसमये यो यद्ध्यायति स तदाप्नोतीत्यर्थः। तथा च श्रुतिः—स यथाक्रतुरयमस्माल्लोकात्प्रैति तावत्क्रतुर्हामुं लोकं प्रेत्याभिसंभवति। स्मृतिश्च—

यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम् ॥
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ इति ॥ १६ ॥

उपासकानां क्रममुक्तिं कथयन्नाह—

मूर्धन्ययोत्क्रान्तेरनावृत्तिर्योगिनां व्यक्तैक्यवत् ॥ १७ ॥

मूर्धन्ययेति। मूर्धन्यया सुषुम्नया। उत्क्रान्तेर्बहिर्गमनात्। अनावृत्तिरपुनरावृत्तिः फलम्। योगिनः सततध्यायिनः। व्यक्तैक्यवद्व्यक्तं निश्चितमैक्यं ब्रह्मात्मनोरभेदो येन तस्येवेत्यर्थः। तथा चोपासका देहं त्यजन्तः सुषुम्नाग्रसंलग्नरविरश्मिस्थमर्चिरादिमार्गमाश्रयमाणाः क्रमाद्विद्युल्लोकं गच्छन्तः केनचिदमानवेन पुरुषेण ब्रह्मलोकं नीयमाना हिरण्यगर्भावसाने परं पदं गच्छन्तीति क्रममुक्तिः। तथा च श्रुतिः—तयोर्ध्वमायन्नमृतत्वमेति। एतेन प्रतिपद्यमाना इमं मानवमावर्तं नाऽऽवर्तन्ते। स्मृतिश्च—

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिवासरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥ इति ॥ १७ ॥

संप्रति मन्दाधिकारिणामुपायमाह—

कर्मयोगः कर्म वाऽपरेषां शिवम् ॥ १८ ॥

कर्मेति। अपरेषामुपासनानधिकारिणाम्। कर्मयोगः कर्मैव योगो योगहेतुत्वात्। यद्वा कर्मणा योगः कर्मयोगो भगवदर्पणबुद्ध्याऽनुष्ठीयमानत्वात्। तत्राप्यशक्तौ कर्माग्निहोत्रेष्टापूर्तादिकं पूर्ववेदोक्तं स्वर्गादिफलायानुष्ठीयमानमपि शिवममुत्रेह च कल्याणदम्। तत्र सकामा धूमादिमार्गेणोर्ध्वलोकं गच्छन्तस्तत्सुखमनुभूय पुनरावर्तन्ते। तत्रापि कर्मभेदेन योनिभेदे तेषामवतरणमाह श्रुतिः—तद्य इह रमणीयचरणा अभ्यासो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा, अथ य इह कपूयचरणा अभ्यासो ह यत्ते कपूयां योनिमापद्येरन्, श्वयोनिं वा शूकरयोनिं वा चाण्डालयोनिं वेति। निष्कामास्तु कर्मिणः पूर्ववदर्चिरादिना व्रजन्तः पुनर्नाऽऽवर्तन्ते ॥ १८ ॥

निरयद्वारमन्यतमानारम्भो दुर्दैवानाम् ॥ १९ ॥

निरयेति । अन्यतमानारम्भोऽन्यतमस्य ज्ञानोपासनाकर्मसु स्वाधिकृतकाण्डस्यानारम्भोऽननुष्ठानम् । निरयद्वारं नरकमार्गः । केषां दुर्दैवानां दुर्भाग्याणाम् । तथा च निरुक्तकाण्डत्रयान्यतमबहिर्मुखाणां न शुक्लगतिर्नापि कृष्णगतिः किन्त्वशुभा तृतीया गतिः श्रूयते । यथा—अथैतयोः पथोर्न कतरेण चनेति । अत एव दुर्दैवानामित्युक्तम् ॥ १९ ॥

शास्त्रार्थमुपसंहरन्नस्य महिमानं दर्शयति—

स्वाध्यायो धियमुत्प्लावयति निसर्गादुत्प्लावयति निसर्गात् ॥ २० ॥

इति चतुर्थे ज्ञानपाठे चतुर्थः प्रपाठः ॥ ४ ॥

---

इति वैयासिके सिद्धान्तदर्शने वेदान्तविज्ञाने परापरतत्त्वनिरूपणे चतुर्थो ज्ञानपाठः ॥ ४ ॥

---

स्वेति । स्वाध्यायः स्वस्य सिद्धान्तशास्त्रस्याध्यायोऽध्ययनम् । निसर्गात्स्वभावाद्धियं बुद्धिमुत्प्लावयत्यूर्ध्वं गमयतीत्यर्थः । तथा च—एतच्छास्त्राध्ययनं निसर्गादेवाध्येतुर्बुद्धिं सपदि कालान्तरे वाऽधिकमीषद्वा लक्ष्यमलक्ष्यं वा कथंचिदूर्ध्वमवश्यं गमयेत् । तेन जन्मान्तरं कुशली कुर्याच्चेति भावः । द्विपदद्विरुक्तिः शास्त्रसमाप्तिं द्योतयति । एतन्नये निर्णीतानां पदार्थानां परिशीलनमर्थतो भगवच्चिन्तैव । ब्रह्मविवर्तरूपत्वोक्तेर्विश्वस्येति मनस्विनां हृद्यम् ॥

शास्त्रशीर्षमिदं गुप्तं काले व्यक्तं महामुनेः ।<br>
मत्वा मातुः प्रसादेन व्याख्यातं जाड्यनुत्तये ॥<br>
ब्रह्मण्यादौ वासिष्ठेऽथ तत्सुतेऽसौ चतुःशती ।<br>
शक्तौ पराशरे पश्चाद्वेदव्यासेऽस्फुरत्ततः ॥<br>
श्रुतिस्मृतिपुराणानां त्रयाणां सह युक्तिभिः ।<br>
संमतं यदतो मानं प्रबलं भुवि किं पुनः ॥<br>
अत्र कोऽनुपयोगोऽस्ति सर्वा संगतिवारिणी ।<br>
विचित्रकारिणी शक्तिर्योगमायोद्भृता यतः ॥<br>
परतत्त्वं यदत्रोक्तं श्रुत्या केवलया न च ।<br>
युक्त्या वा किंत्विहोत्तीर्णं विद्वदनुभवादपि ॥

तार्किकतृणवातालिः सांख्यकुञ्जरकेसरी ।
वेदान्तशेषसिद्धान्तो *महान्तोऽयमुपास्यताम् ॥
बाह्यविज्ञानसोपानमन्तर्विवेकशेखरम् ।
विदित्वैनं महामन्त्रं मनस्तत्त्वे निवेश्यताम् ॥
क्रीडन्तो भवकान्तारे रे रे जीवविहंगमाः ।
सिद्धान्ततरुमारुह्य पीयतां फलपञ्चकम् ॥
गौरनीलतनुः पायादपायात्सुतवत्सला ।
अमेयाऽपि कुले क्वापि या विरेजे यदृच्छया ॥

इति चतुर्थे ज्ञानपाठे चतुर्थः प्रपाठः ॥ ४ ॥

इति वैश्वदेवे भाष्ये निरञ्जनाख्ये चतुर्थो ज्ञानपाठः ।

समाप्तमिदं निरञ्जनभाष्यसमेतं सिद्धान्तदर्शनम् ।

ॐ तत्सद्ब्रह्मार्पणमस्तु ।

आबाल्याद्ब्रह्मचारी विबुधपरिचितः सच्चिदानन्दनाम्ना,
जातो रत्नाकरस्य प्रथिततमतटे यो महाराष्ट्रदेशे ।
दिव्ये दैवात्कुतश्चित्प्रतिवसति नवद्वीपधाम्नीव दीप-
स्तेनाऽऽनन्दाश्रमश्रीहरिनिकटमसौ प्रापि सिद्धान्तराजः ॥ १ ॥

पुण्यनगरभानुर्गुणसिन्धुर्जयताच्छ्रीहरिराश्रितबन्धुः ।
यत्करुणाकणया विरराज श्रुतिसिद्धान्तो दर्शनराजः ॥ २ ॥
शाके सिन्धुधनेभेन्दुमाने पूर्णेन्दुसंनिभम् ।
रेजे यन्त्राक्षरैर्दिव्यैर्दर्शनं चित्रदर्शनम् ॥ ३ ॥

---

* वेदान्तशेषसिद्धान्तो वेदान्तानामुपनिषदां शेषश्चरमः सिद्धान्तो मीमांसा यत्र सः । वेदान्तं शेषयतीति वेदान्तशेषः स चासौ सिद्धान्तश्चेतीति वा । महान्त इति संबोधनादेतदधिकारिणः शास्त्रोक्तगुणवन्त एव सूचिता इति वार्तिकम् ।